# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]


सम्पादकौ

**डॉ. राजारामशुक्लः**
निदेशकः, अनुसन्धानसंस्थानस्य

**डॉ. हरिश्चन्द्रमणित्रिपाठी**
निदेशकः, प्रकाशनसंस्थानस्य






५७ वर्षे

३-४ अङ्कौ

वार्षिकं मूल्यम् - १०० रूप्यकाणि

दिसम्बर-मार्च, २००२-२००३ ई.

# विषयानुक्रमणी

***लघु-ग्रन्थमाला***

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ५७ वर्षे | मार्गशीर्ष-फाल्गुन-पूर्णिमे, वि.सं. २०५९ | ३-४ अङ्कौ |
|---|---|---|


# पण्डितराजजगन्नाथकाव्ये राष्ट्रियभावना


**प्रो. 'अभिराज' - राजेन्द्रमिश्रः**

कुलपतिः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी




राजाश्रितकविर्निसर्गादेव राष्ट्रकविर्भवति यतो हि स्वाश्रयभूतनरपतेः साम्राज्यसौराज्यवर्णनसन्दर्भैरसौ निखिलमपि राष्ट्रं तत्प्रशासनक्षेत्रभूतं यथाकथञ्चित् स्वकाव्यविषयीकरोत्येव। साहितीसूत्रधाराणां पण्डितराजश्रीजगन्नाथचरणानां सन्दर्भे पुनः सत्यमिदं सविशेषं चरितार्थतामेति यतो हि नासावासीत् कस्य-चित्साधारणभूपतेः कृपाकाङ्क्षी। तस्य संरक्षक आसीन्मुगलराजवंशोत्पलभास्करो विद्याविनयसम्पन्नः साहित्यसङ्गीतकलापक्षधरो जहाँगीरतनयश्शाहजहाँनो यः किल आकाश्मीराद् दक्षिणापथं यावन्निष्कण्टकं प्रशशास।

प्रतपति किल दिल्लीधरावल्लभे शाहजहाँने भारतराष्ट्रस्य सीमानोऽति-विस्तरमुपगताः। पश्चिमायां दिशि लाहौरमुल्तानादिकं यावत्, उदीच्यां काश्मीरान् यावत्, प्राच्यां कामरूपान् यावत्, अवाच्याञ्च सागरतटं यावत् तद्युगीनं भारतं विस्तृतमासीत्। अत एव शाहजहाँकृपापात्रस्य तद्बहुमतस्य वा राजकवेः पण्डितराजजगन्नाथस्यापि काव्यदृष्टिस्तद्युगीनभारतराष्ट्रविस्तरानुवर्तिनी सती महतीमायतिं विस्तृतिञ्चोपगता।

भवतु। पण्डितराजजगन्नाथस्य प्रशस्तकाव्यदृष्टेर्बृहती चर्चा पश्चात्करिष्यते। प्रथमं तावत्प्रास्ताविकं किञ्चिदपेक्ष्यते। मुगलराजवंशपरम्परायां बाबर-हुंमायुँ-अकबर-जहाँगीरानन्तरं खुर्रमेति शैशवनामधेयः शहंशाहश्शाहजहाँनः सप्तदशतमे खिस्तीयशतकेऽष्टाविंशतितमाब्दादारभ्य अष्टपञ्चाशत्तमाब्दं यावन्निष्कण्टकं

शासनञ्चकार। अस्यैव स्थापत्यकलाप्रेमिणः सार्वभौमसम्राजो राजकविरासीत्तैलङ्गद्विजवंशावतंसो लक्ष्मीपेरमभट्टसूनुर्महाकविः पण्डितराजो जगन्नाथो यस्य प्रोद्धुरा काव्यधिषणाऽद्यापि स्मृतिपथमानीयते सहृदयैः।

यद्यपि पण्डितराजाभिव्यक्तैरन्तस्साक्ष्यैः साधु स्फारीभवति तथ्यमिदं यदसौ स्वकीये जीवने संरक्षकचतुष्टयस्य स्नेहसौजन्यबहुमानदाक्षिण्यसम्पदमुपबुभोज। तथापि कालक्रमेण तेषु प्रथम आसीत्सम्राट् **जहाँगीरो यं** नूरदीनव्याजेन[१] संस्मरति पण्डितराजः। द्वितीयोऽथ च सर्वप्रमुखस्संरक्षक आसीत्सम्राट् शहाबदीनाऽपरपर्याय**श्शाहजहाँनो** यस्य पाणिपल्लवतले महाकविर्नवीनं वयो नीतवान्। आसफविलासाख्यायिकायामिममेव संरक्षकोत्तमं स्मरति पण्डितराजः साहिजहानाभिधश्चक्रवर्तीति श्रीसार्वभौमसाहिजहानेति च पदद्वयेन।

कामरूपाधिपतिः **प्राणनारायण** उदयपुराधीश्वरो **जगत्सिंहश्च** पण्डितराजस्यापरौ द्वौ संरक्षकौ यत्कृतेऽसौ प्राणाभरणाख्यं जगदाभरणाख्यञ्च काव्यद्वयं प्रायेण समसंविधानकं[२] रचयाम्बभूव।

एवमेव नेपालनरेशमपि कञ्चिद् अस्फुटीकृताभिधानं प्रशंसति पण्डितराजः। तद्यथा—

**स्पृशति त्वयि यदि चापं स्वापं प्रापन्न केऽपि नरपालाः।**
**शोणे तु नयनकोणे को नेपालेन्द्र! तव सुखं स्वपितु।।**

उपर्युल्लिखिताः सर्वेऽपि नरपतयः ख्रिस्तीये सप्तदशशतक एव सञ्जाताः। जहाँगीरः १६०५ तः १६२७ तमं यावत्, शाहजहाँनः १६२८ तः १६५८ तमं यावत्, जगत्सिंहः १६२८ तः १६५९ तमं यावत्, प्राणनारायणश्च १६३३ तः १६६६ तमं यावद् धरामण्डलमिदमलञ्चक्रुः। सम्राज्ञ्या नूरजहाँयाः सोदरो

---

१. श्यामं यज्ञोपवीतं तव किमिति मषीसङ्गमात् कुत्र जातः
सोऽयं शीतांशुकन्यापयसि कथमभूत्तज्जलं कज्जलाक्तम्?
व्याकुप्यन्नूरदीनक्षितिरमणरिपुक्षोणिभृत्पक्ष्मलाक्षी-
लक्षाक्षीणाश्रुधारासमुदितसरितां सर्वतः सङ्गमेन।।

२. जागर्तु क्षितिमण्डले चिरमिह श्रीकामरूपेश्वरः।
जागर्तु क्षितिमण्डलोपरि जगत्सिंहो धराधीश्वरः।।२।।
दुग्धाब्धे! भवता समो विजयते श्रीप्राणनारायणः।
दुग्धाब्धे! भवता समो विजयते श्रीकर्णजन्मार्णवः।।५।।
नुतो निखिलभूसुरैर्जयति कामरूपेश्वरः।
नुतो निखिलभूसुरैर्विजयते जगत्केसरी।।२३।।
सन्तुष्टः कमताधिपस्य कवितामाकर्ण्य तद्वर्णनम्।
श्रीराणाकलिकर्णनन्दनजगत्सिंहप्रभोर्वर्णनम्।।५३।। (प्राणाभरणजगदाभरणयोः)

मुगलसैन्यपतिरासफखानोऽपि एकचत्वारिंशदुत्तरषोडशशततमे खिस्ताब्दे (१६४१ ई.) स्वजीवनलीलां संववारेति निश्चीयते ऐतिह्यप्रमाणैः। एवं हि, सर्वथा सुविदितं सर्वस्वीकृतञ्चेदं तथ्यं यत्पण्डितराजो जगन्नाथोऽपि सप्तदशशताब्दं खिस्तीयमलञ्चकार। प्रायेण विद्वांसस्तस्य जीवनावधिं साहित्यसर्जनप्रचुरं विंशत्यधिकषोडशशततमात् खिस्ताब्दात् षष्टितमवर्षं यावत् (१६२०-६० ई.) स्वीकुर्वन्ति।

पण्डितराज (मूलतः पण्डितरायः) इतीयं सम्मानना जगन्नाथकवये महीपतिरेव (शाहजहाँनः) प्रायच्छदित्यत्र न कश्चन सन्देहः। स्वयमङ्गीकरोति तथ्यमिदं जगन्नाथ आसफविलासाख्यायिकायाश्चरमांशे। तद्यथा—

'श्रीसार्वभौमसाहिजहानप्रसादाधिगत**पण्डितराय**पदवीविराजितेन तैलङ्ग-कुलावतंसेन पण्डितजगन्नाथेन असफविलासाख्येयमाख्यायिका निरमीयत। सेयमनुग्रहेण सहृदयानामनुदिनमुल्लासिता भवतात्'।

एवंगुणविशिष्टः सारस्वतसाधनाविद्योतितान्तःकरणो दुर्धर्षपाण्डित्यगर्वितः काव्यशास्त्रदर्शनादिचूडान्तसिद्धान्तपारगो जगन्नाथोऽनन्यसाधारणं जीवनं जिजीवेति स्फुटं ज्ञायते ऐतिहासिकसाक्ष्यैः। स खलु लवङ्गीनाम्नीं कामप्यपूर्वसुन्दरीं तुरुष्ककन्यामुपयेमे यत्परिणामवशादाजीवनं स्वयुगीनब्राह्मणसमाजोत्थापितां तिरस्कारोपेक्षाकौलीनापमानझञ्झावात्यां जीवातुसम्बलघ्नीं सेहे। एवम्भूतेऽपि महामनसो महायशसो महौजसश्च तस्य वाणीपुत्रस्य जिजीविषा न मनागपि शैथिल्यं भेजे। आजीवनमसौ प्रतिवातं यात्रां कृतवान् ररक्ष च सम्यक्प्रकारेण स्वाभिमानं स्वव्यक्तित्वगौरवम्। पण्डितराजो न जात्वात्मानमवसादितवान्, न चात्मकृतं कदापि निनिन्द, न वा प्रायश्चित्तं कृतवान्, न चापि पश्चात्ततताप। लोकविरुद्धमाचरताऽपि तेन आन्तरं मनस्सामञ्जस्यं साधु रक्षितम्। तत्कृता देवाराधना न खलु प्रायश्चित्तपर्यायभूताऽपि तु तदगाधास्थाभिव्यक्तिभूतैव। स आत्मानं विष्ण्वादिवशंवदं प्रेष्ठं नेदिष्ठं वात्सल्यकरम्बितं मत्वैव विविधान् देवान् समाराधयति। सहजदेवरतिपक्षधर आसीत्पण्डितराजः।

इयमासीत्पृष्ठभूमिः पण्डितराजस्य लोकोत्तरकविकर्मणः। नासौ देशकालव्यक्तिसीमाबन्धनैरात्मानं संयम्य कवितां प्रणिनाय। लोकस्तस्य कृतेऽसाक्षिक एवासीत्, यतो हि सर्वा पीडा, सर्वविधा व्यथा, यन्त्रणा, कदर्थना, सर्वविधोपहासो वा दुराराध्यलोकेनैव तस्मै समुपायनीकृतः। तादृश

ईर्ष्याऽमर्षपरायणलोकः पण्डितराजार्थं कथं रुचिकरः प्रमाणकल्पो वा स्यात्? अनेनैव प्रकारेण कालोऽपि तं महाकविं न कथमपि बबन्ध। पण्डितराजवाङ्मयेन केवलं मुगलशासनकालबोधो न जायते। यदि तेन आसफविलासाख्यायिका न प्रणीताऽभविष्यत्, यदि वा क्वाचित्करीत्या तत्कृता दिल्लीश्वर-प्रशस्तिर्नोट्टङ्किताऽभविष्यत् तर्हि तस्य मुगलराजवंशाश्रिततत्वमपि सर्वथाऽज्ञेयमेवासीत्।

वस्तुतः पण्डितराजस्य कवित्वं सर्वविधबन्धनविमुक्तं सर्वतन्त्रस्वतन्त्रञ्चासीत्। इदमेव तावद् राष्ट्रियतायाः प्रथमं वैशिष्ट्यम्। राष्ट्रं नाम किम्? राजते इति राष्ट्रम् (राज्धातोः ष्ट्रन्प्रत्ययः) यैरनन्यसाधारणैर्वैशिष्ट्यैः कोऽपि देशः प्रत्यायितस्सन् प्रत्यभिज्ञातस्स्यात् तेषां वैशिष्ट्यानां काव्यमयं वर्णनमेव राष्ट्रियत्वं सृजति इत्यहं मन्ये।

हिमालयपर्वतो देवविहारभूमिः। देवतात्माऽसौ गिरिर्यत्र वर्तन्ते गन्धमादनेन्द्रकीलप्रभृतयो गगनचुम्बिशिखराः। ईदृशो देवसंस्कृतिसमन्वितः पर्वतो भारत एव वर्तते, नान्यत्र क्वचित्। गङ्गायमुनासरस्वतीनर्मदाः-कावेरीशिप्रागोदावरीप्रभृतयस्तीर्थजनयित्र्यो नद्योऽपि भारतभूमावेव वर्तन्ते। विविधप्रकृतिरम्या विविधफलपुष्पसमृद्धिविलसिता विविधप्रभावाः षड्ऋतवोऽपि भारत एव वर्तन्ते, नान्यत्र क्वचिद् भूतले। शुकसारिकाचकोरचक्रवाक-हंसक्रौञ्चकलविङ्ककारण्डवकोकिलचातकादयश्चित्रविचित्रमधुरनादा विहङ्गमा अपि हरिलीलायिते भारत एव वर्तन्ते। सत्यरक्षको हरिश्चन्द्रः, शरणागतवत्सलश्शिविः, अतिथिदेवो रन्तिदेवः, पितृनिदेशानुवर्ती मर्यादापुरुषोत्तमो दाशरथिः, दानवीरो नृगो धर्ममूर्तिर्युधिष्ठिरः—किं बहुना, सर्वविधलोकोत्तरादर्शप्रतिमानभूतानि पात्राण्यस्मिन्नेव विश्वविश्रुतराष्ट्रे सम्भूतानि यैर्भारतराष्ट्रमिदं चिरकालादेव स्वगुणगन्धगरिम्णा प्रख्यातेः परां कोटिमधिरूढं निखिलेऽप्यनेहसि। भगवान् मनुरपि समर्थयते भङ्ग्यन्तरेण सत्यमिदम्[१]। एतेषां लोकोत्तरवैशिष्ट्यानां हृद्याऽनवद्यवर्णनमेव राष्ट्रियत्वमिति स्वीकरणीयम्।

कविकुलगुरुः **कालिदासो**ऽप्यस्मादेव कारणाद्राष्ट्रकविः प्रतिभाति, यतो हि तत्कवितया भारतराष्ट्रं साकारमिव प्रतीयते। रघुदिग्विजयप्रसङ्गेन, मेघस्य यात्राप्रसङ्गेन वा कविर्भारतस्थजनपदानां विस्तृतं परिचयं

१. एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥ (मनुस्मृतिः)

शैलकाननदीनदसरोवरग्रामनगरवर्णनपुरस्सरं प्रस्तौति। ऋतुसंहारकाव्येऽपि षड्ऋतूनामसौ अद्भुतं मनोमुग्धकारि वर्णनमुपन्यस्यति। इन्दुमतीस्वयंवरव्याजेन भारताङ्गभूतानां विविधजनपदानां तत्तद्वैशिष्ट्यविच्छित्तिप्रस्तुतिपुरस्सरं रमणीयवर्णनमसौ प्रस्तौति। वस्तुत: कालिदासकवित्वं भारतं सम्यक् परिचाययति।

तयैव दृष्ट्या समीक्षिते सति महाप्राज्ञस्य पण्डितराजस्यापि काव्यवाङ्मयं सर्वतोमुखं भारतप्रतिबिम्बभूतं प्रतीयते। पण्डितराजोऽपि देवलीलास्थलीभूतं यामुनगाङ्गसङ्गमविलसितं भारतराष्ट्रं मनसा वाचा कर्मणा चात्मसात्करोति। भारतस्था: शैला नद्य: काननानि विविधजनपदा विहङ्गमा निसर्गा जनसमवायाश्च कविना यथारुचि वर्णिता:। स्वोपज्ञाभि: पञ्चलहरीभि: गङ्गायमुनासूर्यविष्णुलक्ष्मीसंज्ञका देवास्तेन महाकविना प्रतिभाप्रकर्षसमन्वितै रुचिरपदबन्धैरुपस्तुता:। पक्षोऽयं पश्चात् सविस्तरं व्याख्यास्यते।

भारतराष्ट्रवैशिष्ट्यानां विस्तृतचर्चाया: प्राक् कोऽप्यन्य: प्रस्तावोऽत्र समुपस्थाप्यते। इदानीं द्वेषदैन्यवर्गसङ्घर्षजर्जरिते भारतराष्ट्रे साम्प्रदायिकविद्वेष: परां काष्ठामधिरूढो दृश्यते; परन्तु मुगलशासनकाले हिन्दुमुस्लिमसमाजयो: परं सामञ्जस्यमासीत्। आमेरराजवंशीयै: क्षत्रियैस्सार्धं सम्राजोऽकबरस्य जहाँगीरस्य च वैवाहिका: सम्बन्धा आसन् इति प्रमाणै: परिपुष्टं तथ्यम्। शतमिता: सहस्रमिता वा मुहम्मदमतावलम्बिनो जनाश्चापि हिन्दुसुहृत्प्रभाववशात् परमभागवता वैष्णवाश्च सञ्जातास्तस्मिन् काले। बैरमखानसूनुर्महासेनानायकोऽब्दुर्रहीमो न केवलं नन्दनन्दनस्य कृष्णस्य महान् भक्त एव आसीदपि तु भगवतीं भागीरथीं प्रत्यपि तस्यासीन्महती श्रद्धा। स्वोपज्ञे संस्कृतनिबद्धे गङ्गाष्टकेऽसौ स्वमुक्त्यर्थं भगवतीं भागीरथीं सदयं प्रार्थयते।

एवं हि तस्मिन् युगे हिन्दुमुहम्मदधर्मसामञ्जस्यमयी काऽपि **तृतीया** विलक्षणा धर्मधारा प्रवहन्ती सन्दृश्यते। अस्यां धारायामुभयोर्धर्मयो: पारस्परिकं सामञ्जस्यं समवलोक्यते। एकतस्तु सम्राडकबरो **दीनइलाही**संस्थापनया तां धारां पुपोषापरतश्चाब्दुर्रहीमखानखान: स्वकीयैर्विष्णुभक्तिपरै: काव्यैस्तां धारां द्रढयति। तद्यथा—

अच्युतचरनतरंगिनी सिवसिरमालतिमाल।
हरि न बनायौ सुरसरी कीजै इन्दवभाल।।

इयमेवोभयधर्मसामञ्जस्यकरी राष्ट्रिया काव्यधारा पण्डितराजाय जगन्नाथायाप्यरोचत। स खलु मुक्तकण्ठेन तुरुष्कमतावलम्बिनोऽपि विद्याविनय-सद्‌गुणसम्पन्नान् लोकनायकान् अनुत्तमैर्विशेषणैः प्रशंसितवान्। नासौ धर्मं सङ्कीर्णदृष्ट्या समीक्षितवान्। प्राणनारायणे जगत्सिंहे आसफखाने चासीत्तस्य समानो गुणानुरोधः। न खल्वसौ हिन्दुत्वगर्वितस्सन् इस्लामधर्मं विद्वेष्टि स्म। सहृदयेस्लामधर्मानुयाय्यपेक्षयाऽसौ मात्सर्यद्वेषग्रस्तं दुर्हृदयं हिन्दुमेव समभ्यधिकं निनिन्द। प्रमाणं तत्र—

न याचे हिन्दूकं पर्वणि दत्तैकताम्रडब्बूकम्।
याचे मुगलमुलूकं तृणीकृतस्वर्णचन्दूकम्।।

पण्डितराजस्य काव्यं तत्प्रतिभोद्भूतं सदपि क्वचित् खानख़ानाऽधमर्णं संलक्ष्यत एव। उपर्युल्लिखितं रहीमदोधकं (दोहा इति) पण्डितराजोऽ-विकलमनुवदति। तद्यथा—

हरिचरणनखरसङ्गादेके हरमूर्धसंस्थितेरन्ये।
त्वां प्राहुः पुण्यतमामपरे सुरतटिनि! वस्तुमाहात्म्यात्।।

उदाहरणान्तरं तावत्पर्यायेण प्रस्तूयते—

सर सूखे पंछी उड़हिं औरे सरन्हि समाहिं।
दीन मीन बिनु पच्छ के कहु रहीम कहँ जाहिं।।

पण्डितराजो भावसौन्दर्यमिदं सविशेषं प्रस्तौति—

आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसालमुकुलानि समाश्रयन्ते।
सङ्कोचमञ्चति सरस्त्वयि दीनदीनो
मीनो नु हन्त कतमां गतिमभ्युपैतु।।

साम्प्रदायिकसद्भाव एवाधुनातनभारतीयराष्ट्रियताया महिष्ठः पक्षः। अयमेव पक्षस्तावत् शतत्रयवर्षपूर्वं राष्ट्रेऽस्मिन् महाकविना पण्डितराजेन सयत्नं पोषितः। विद्याकलोपासकान् स्वाश्रयभूतान् भूपतीनसौ ससौहार्दं प्रशशंस। यथा हि—

सुराणामारामादिह झगिति झञ्झानिलहता:
पतेयुश्शाखीन्द्रा यदि तदखिलो नन्दति जन:।
किमेभिर्वा कार्यं शिव शिव विवेकेन विकलै-
श्चिरञ्जीवन्नास्तामधिधरणि दिल्लीनरपति:।। (रसगङ्गाधरे)

यथा च—

दिल्लीश्वरो वा जगदीश्वरो वा मनोरथं पूरयितुं समर्थ:।
अन्यैर्नृपालै: परिदीयमानं शाकाय वा स्याल्लवणाय वा स्यात्।।

यथा वा—

शास्त्राण्याकलितानि नित्यविधय: सर्वेऽपि सम्भाविता:
दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वय:।
सम्प्रत्युज्झितवासनं मधुपुरीमध्ये हरिस्सेव्यते
सर्वं पण्डितराजराजितिलकेनाकारि लोकाधिकम्।।
(भा.वि. ४।४५)

मात्सर्यग्रस्ता हिन्दुमतावलम्बिनो धर्मान्धा जना: पण्डितराजस्य मुगलमहीपतिकृपापात्रत्वं नाभिननन्दु:। यवनीपरिणयव्याजेन तेषां मात्सर्यमिदं समधिकतरं ववृधे। अस्मादेव कारणाल्लोकोत्तरवर्णनानिपुणमपि पण्डितराजस्य निष्कल्मषं कविकर्म तेभ्यो नातितरामरोचत। अप्पयदीक्षितप्रमुखा द्विजत्वाभिमानिन: कवय: पण्डितराजाय नितरां द्रुह्यन्ति स्म। तथाप्यप्रतिहतधर्मनिष्ठोऽयं महाकविर्न मनागपि चचाल। स आत्मानं प्रबोधितवान्—

मद्वाणि! मा कुरु विषादमनादरेण
मात्सर्यमग्नमनसां सहसा खलानाम्।
काव्यारविन्दमकरन्दमधुव्रताना-
मास्येषु धास्यसितमां कति नो विलासान्।। (भा.वि. ४।४०)

कामं सङ्कीर्णदृष्टयो जना लवङ्गीपरिणयव्याजेन पण्डितराजं धर्मच्युतं मन्येरन्, तथाप्याजीवनं महासत्त्वोऽयं कविर्धर्मपथाधिरूढमात्मानं मेने। धर्मस्य गहना गति:। किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिता:। केवलं धर्मान्तरासक्तकन्यां परिणीय मानवो न स्वधर्मच्युतो भवति।

मौर्यवंशीयश्चन्द्रगुप्तोऽपि यवनसेनापतिकन्यां परिणिनाय; परन्तु नाऽसौ धर्माच्च्युतो जातः। प्रेम्णि सर्वं सम्भवति। पण्डितराजोऽपि स्वप्रणयरक्षणार्थं लवङ्गीमङ्गीचकार। वस्तुतो बकवृत्तिः पण्डितसमाजो राजसम्मानं दुर्धर्षपाण्डित्यञ्च जगन्नाथस्या-सहमानस्तस्य सापत्न्यं भेजे। यवनीपरिणयस्तु अलीकव्याज आसीत् पण्डितराजविरोधस्य।

एवम्भूतेऽपि पण्डितराजस्य धर्मरतिर्निश्चलैवासीत्। सिन्धुगभीरा तस्य धर्मनिष्ठा, सुरसिन्धुसलिलनिर्मला तस्य भगवत्परायणा चित्तवृत्तिः हिमाचलशिखरोत्तुङ्गश्च तस्यात्मविश्वासः, सर्वमेतन्न किमपि दुष्टजननिन्दया खलीभूतम्। शान्तविलासपद्यानि तत्र प्रमाणभूतानि।

सपदि विलयमेतु राजलक्ष्मीः सपदि पतत्वथवा कृपाणधारा।
अपहरतुतरां शिरः कृतान्तो मम तु मतिर्न मनागपैतु धर्मात्॥
अपि बहलदहनजालं मूर्ध्नि रिपुर्मे निरन्तरं धमतु।
पातयतु वाऽसिधारामहमणुमात्रं न किञ्चिदपि भाषे॥

(शान्तविलासः, भामिनी, ४३-४४)

इयमात्मस्वीकृतिः पण्डितराजस्यार्जवं शीलं चरित्रञ्च साधु प्रकाशयति। कियत् सहिष्णुत्वं कियदौदार्यं कियच्च दैन्यं महाकवेरासीत्? सत्यमेव रिपुभिः समाचरितं तारापथविपुलं दुष्कृतं पण्डितराजो मर्षितवान्। न किञ्चिदपि बभाषे भगवदाश्रितत्वात्। अन्येषां मयूरव्यंसकोपमानां धार्मिकाणां शरणागतिर्नाट्यमात्रमासीत्; परन्तु पण्डितराजस्य शरणागतिर्हृत्प्रसूतविनयार्जव-प्रतिफलकल्पाऽऽसीदित्यत्र न कश्चन सन्देहः।

साम्प्रदायिकसौमनस्यपक्षधरस्सन् पण्डितराजो राष्ट्रियमाङ्गल्यं स्वकवितया व्यवहारेण च सम्पादयामास।

न केवलमेतावन्मात्रम्। राष्ट्रियताया अपरोऽपि पक्षस्तेन दृढीकृतः। निखिलेऽपि महीतले भारतराष्ट्रं गङ्गाहिमाचलाभ्यामेव प्रत्यभिज्ञायते। बृहत्तरभारताङ्गभूतेऽपि प्रत्येकस्मिन् राष्ट्रे प्रायेण विद्यते तदीया काऽपि गङ्गा। मीकाङ्गनाम्नी काचित्सरित् सम्प्रति कम्बोडियावियतनामयोः सीमारेखां निश्चिनोति। इयं नद्यपि तत्रस्थैर्जनैः पवित्रतमा मुक्तिदात्री च स्वीक्रियते। अत्र **मी**-शब्दः मातृपर्यायभूतः **काङ्गशब्दश्च गङ्गावाचकः**। एवं हि मीकाङ्गसरिदपि मातरं

गङ्गामेव स्मारयति। बालीद्वीपवासिनां कृते इन्द्रतीर्थनिःसृता (तीर्त-एम्पुल) **पकेरिसान**नाम्नी नदी एव तदीया गङ्गा। लोम्बोकद्वीपेऽपि बालीप्रतिवेशिभूते मया **सुरनद्या** दर्शनं कृतं या खलु तत्रस्थैर्हिन्दुभिर्गङ्गैवाङ्गीक्रियते। चीनदेशीयाः सीक्यांगप्रभृतिनद्योऽपि गङ्गाभिधानप्रतिच्छविमेवानुहरन्ति। मन्येऽफ्रिकाराष्ट्रे प्रवहन्ती काङ्गोनाम्नी सरिदपि गङ्गामेव स्मारयति। प्रमाणाभाववशादस्मिन् विषये पुष्कलं वक्तुं नोचितं प्रतिभाति। तथापि गङ्गाया भारतनामान्तरत्वं न कथमप्यपलपितुं शक्यते। संस्कृतकविषु स एव धन्यतमो यो भगवतीं भागीरथीं स्तौति।

यद्यपि वाल्मीकिव्यासकालिदासादयो नैके कवयो गङ्गां सश्रद्धं वर्णयन्ति; परन्तु तेषां वर्णनं केवलं स्तोत्रपरिपाटीमेव पुष्णाति। कल्पनायथार्थसम्मिश्रणभूतं प्राक्तनकवीनां वर्णनमलङ्कारदृष्ट्या सौशब्द्यदृष्ट्या कल्पनादृष्ट्या वा कामं महीयेत; परन्तु तेषु वर्णनेषु न दृश्यते जिजीविषातत्त्वम्।

पण्डितराजो जगन्नाथो यथा भगवतीं भागीरथीं स्तौति, स प्रकार एव विलक्षणः। यथा सर्वविधाऽसहायः सर्वापराधभारभङ्गुरः सर्वथा पराजितः, सर्वथा निरवलम्बः कोऽपि बालको दयावात्सल्यभरितां मातरमेवान्तिमं शरणं पश्यति, तथैव पण्डितराजोऽपि सुरसिन्धुं सर्वपापापहारिणीं मन्यते।

भारतस्य **गङ्गामयत्वं** स्वीकरोति पण्डितराजः। देवनदी गङ्गा न खलु देशान्तरनदीसमवाय इव केवलं निसर्गाङ्गभूता काचिज्जलप्रवाहवती सरित्। वस्तुतो गङ्गाऽस्ति भारतस्य प्राक्तनमैतिह्यं वर्तमानं गौरवं भविष्यत्कालीनञ्चास्तित्वम्। गङ्गा न केवलं साधारणनदी। सा खलु नृपभगीरथतपःप्रह्वीभूता कापि ममतामयी जनन्यपि, या विष्णुचरणनखनिर्णेजनसलिलभूता विरञ्चिकमण्डलोर्निर्गत्य धूर्जटिजटाजूटग्रन्थिषु परिलुठन्ती हिमगिरिशिखरस्थगोमुखादग्रेसरीभूय सहस्रमितानि तीर्थानि विरचयन्ती विविधनगरग्रामजनपदाश्रमनिकरान् पावयन्ती गङ्गाद्वारस्थे कपिलाश्रमे तच्छापदग्धान् षष्टिसहस्रमितान् भगीरथपूर्वजान् प्रेतभूतान् तारयति, स्वर्गं गमयति च।

इयमेव गङ्गा भारतस्य प्रतीकभूता। बालकानां मुण्डनकर्मणि सैव साक्षिणी। विधवानां दुर्भाग्यव्यतिकरे सैव साक्षिणी। दानकर्मणि स्नानजन्यपुण्यलाभकर्मणि सैव साक्षिभूता। प्राणत्यागक्षणेऽपि स्वर्गप्राप्त्यर्थं सैव साक्षिणी। जननादारभ्य मृत्युक्षणं यावद् गङ्गैव सर्वस्वभूता समेषामेव भारतवासिनाम्। निखिलेऽपि राष्ट्रे सहस्रमितानि गङ्गातीर्थानि वर्तन्ते। यत्र कुत्रापि कृतं स्नानं **'हर हर गङ्गे'** इति

समुच्चारणपुरस्कृतं गङ्गास्नानमेव समवगम्यते। अनेनैव गरिम्णाऽद्वितीया सत्यपि गङ्गा बहुलीभूता दृश्यते भारते। **आदिगङ्गे**त्युच्यते गोमती। **दक्षिणगङ्गे**त्युच्यते कावेरी। **अर्धगङ्गे**त्युच्यते नर्मदापि पुराणेषु।

गङ्गानामोच्चारणमात्रेणैव भारतराष्ट्रं स्मृतिपथमेति। वस्तुतो गङ्गैव भारतम्। तामेव पापापनोदिनीं गङ्गां सादरं सविनयमुपस्तौति महाकविर्जगन्नाथः। जगन्नाथस्तुता जाह्नवी न केवलं पुराणोक्तविशेषणानां लक्ष्यभूताऽपि तु भारतराष्ट्रस्य स्वरूपं सा साधु प्रकाशयति। जनकविर्जगन्नाथो गङ्गां न केवलं धनकुबेराणां देवगन्धर्वादीनां वा पक्षधरीं मन्यते; अपि तु गङ्गामसौ दीनदरिद्राणां समुद्धारयित्रीं पश्यति। तद्यथा—

जडानन्धान् पङ्गून् प्रकृतिबधिरानुक्तिविकलान्
ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन्।
निलिम्पैर्निर्मुक्तानपि च निरयान्तर्निपततो
नरानम्ब! त्रातुं त्वमिह परमं भेषजमसि।।

पुनश्च—

पुरो धावं धावं द्रविणमदिराघूर्णितदृशां
महीपानां नानातरुणतरखेदस्य नियतम्।
ममैवायं मन्तुः स्वहितशतहन्तुर्जडधियो
वियोगस्ते मातर्यदिह करुणातः क्षणमपि।।

सन्तप्तो जनः सर्वप्रथमं स्वमनोव्यथां मित्रेषु प्रकाशयति। स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवतीति कविकुलगुरोरुक्तिः शाकुन्तलनाटके; परन्तु स्निग्धजनेष्वपि व्यथानिवारणेऽसमर्थेषु सत्सु आर्तजनः स्वकीयमिष्टदेवं शरणमुपैति। तत्रापि मातृहृदयं प्रभवति। यथा शिशुर्जननीं शरणं मत्वाऽन्यजनसमक्षमनाख्येयमपि दुःखं प्रकटयति, तां सर्वस्वं मत्वा तदुत्सङ्गे मुखं गोपायित्वा व्यथाभयमुक्तमात्मानमनुभवति, तथैव पण्डितराजो जगन्नाथोऽपि गङ्गामुपेत्य आनन्दनिर्भरो जायते। तत्कृते गङ्गैव सर्वरोगव्याधिभयानामौषधम्। गङ्गासलिलचुलुकपरिपानमेव मानवजीवनस्य सौभाग्यपराकाष्ठा। इदं सौभाग्यमुत्तरोत्तरं प्रवर्धते। तद्यथा—

केचित्स्मरन्त्यनुसरन्ति च केचिदन्ये
पश्यन्ति पुण्यपुरुषा: कति च स्पृशन्ति।
मातर्मुरारिचरणाम्बुजमाध्वि! गङ्गे!
भाग्याधिका: कतिपये भवतीं पिबन्ति।।

सर्वविधपापानां विनाशिका भगवती गङ्गा। यैर्जनैर्निरर्थकं जीवनं यापितं तेषामप्यन्तिमं शरणं गङ्गैव। अस्मिन् सन्दर्भे पण्डितराज: प्रकारान्तरेणात्मजीवनवैयर्थ्यमपि निर्विशङ्कं प्रकाशयति। तद्यथा—

श्ववृत्तिव्यासङ्गो नियतमथ मिथ्याप्रलपनं
कुतर्केष्वभ्यास: सततपरपैशुन्यमवनम्।
अपि श्रावं श्रावं मम तु पुनरेवंविधगुणान्
ऋते त्वत्को नाम क्षणमपि निरीक्षेत वदनम्।।

सत्यमेव पण्डितराज: अवाञ्छन्नपि वैरिविरोधप्रशमनाय कुतर्काभ्यासमेव कृतवान्। चित्रमीमांसाखण्डनं मनोरमाकुचमर्दनमिति च टीकाद्वयं तस्यैव कुतर्कस्य परिणति: प्रतीयते। परपैशुन्यमवनमपि अगत्या तेन कृतमेव। अकारणवैरिमुखद्वाराणि पिधातुं तेन किं किं न कृतम्? अमृतान्त:करणोऽपि जगन्नाथो विषवमनाय सम्प्रेरित: समाजेन स्वयुगीनेन; परन्तु को नु खल्वन्य: कवि: स्वकीयमाचरणमेवं प्रकाशयति? पण्डितराज: पुन: स्फटिकनिर्मलान्त:करणो भगवत्या गङ्गाया: समक्षं सर्वं प्रकाशयत्यात्मानं सर्वविधदुष्कर्ममुक्तञ्च विदधाति। तत्प्रमाणेनैव—

त्रपन्ते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ
करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतय:।
इमं तं मामम्ब त्वमियमनुकम्पार्द्रहृदये
पुनाना सर्वेषामघमथनदर्पं दलयसि।।

पण्डितराजप्रणीता **गङ्गालहरी** न तावत्स्तोत्रकाव्यमात्रमेव। वस्तुत: काव्यमिदं **सुतजननीसंवाद** इव प्रतीयते। स्तोत्रस्येयमेव पराकाष्ठा यद् भक्त: किमपि व्यवधानं नानुभवेत्। स्वदैन्यं दु:खं पापं दोषञ्च स्वामिसमक्षं निर्भयं प्रकाशयेत्। वस्तुत: पण्डितराज: स्वार्तिनिवेदनव्याजेन निखिलामपि भारतीं प्रजां

प्रस्तौति। अद्यापि लक्षकोटिमिता भारतीया गङ्गास्नानमात्रेणैव आत्मदोषदैन्यपापक्षयं मन्यन्ते। इदं भारतस्य राष्ट्रियं वैशिष्ट्यं सद्रहस्यमतिगूढं प्रतीयते।

तोयं गङ्गा तदितरदयां निर्मलं सङ्गमात्रं
देवौ तस्याः प्रभवनिलयौ नाकिनोऽन्ये च देवाः।
सा यत्रास्ते स हि जनपदो मृत्तिकामात्रमन्य-
स्तां यो नित्यं नमति स बुधो बोधशून्यस्तदन्यः।।

गङ्गायाः पारमार्थिकं निराकारं रूपं विलक्षणमेव प्रतिभाति। ब्रह्मतत्त्वमिव गूढातिगूढं तद्रूपं कथमपि विज्ञातुमनुभवितुं वा न शक्यम्। पण्डितराजः कथयति—

न यत्साक्षाद्वेदैरपि गलितभेदैरवसितं
न यस्मिञ्जीवानां प्रसरति मनोवागवसरः।
निराकारं नित्यं निजमहिमनिर्वासिततमो
विशुद्धं यत्तत्त्वं सुरतटिनि! तत् त्वं न विषयः।।

विनयौदार्यविलसिता परमेश्वरभक्तिरपि भारतराष्ट्रस्य महती विशेषता। राष्ट्रेऽस्मिन् दुरभिमानगर्वाहङ्कारादिभावानां समादरो न केनापि कृतः। हिरण्यकशिपुरावणकंसादयो लोकशातका न कैश्चिदपि कविभिः प्रशंसिताः स्वकाव्यनायकीकृता वा। आजीवनं पापाचारताण्डवं कुर्वतामपि तेषामन्ते विनाश एव सञ्जातः। भारतीया संस्कृतिः शुनि श्वपाके च समानरूपेण परमेश्वरं पश्यति। कालिदासप्रभृतयः सर्वेऽपि कवयः परमेश्वरं प्रति विनता दृश्यन्ते। ईश्वरास्था खल्वस्माकं राष्ट्रियं चरित्रम्।

पण्डितराजस्य निरतिशया परमेश्वरभक्तिस्तु नास्तिकानामपि समवायमास्तिकीकर्तुं समर्था। स खलु मुक्तमनसाऽऽत्मानं सर्वविधदुष्कृतभाजनं मत्वा परमेश्वरं शरणं कामयते। तद्यथा—

विषीदता नाथ विषानलोपमे विषादभूमौ भवसागरे विभो!
परं प्रतीकारमपश्यताऽधुना ममायमात्मा भवते निवेदितः।।
अयि दीनतरं दयानिधे! दुःखस्थं सकलैः समुज्झितम्।
अधुनाऽपि न मां निभालयन् भजसे हा कथमश्मचित्तताम्।।

नितरां विनयेन पृच्छ्यते सुविचार्योत्तरमत्र यच्छ मे।
करितो गिरितोऽप्यहं गुरुस्त्वरितो नोद्धरसे यदद्य माम्।।
क्षुधितस्य नहि त्रपास्ति मे प्रतिरथ्यं प्रतिगृह्णतः कणान्।
अकलङ्क! यशस्करं न ते भवदीयोऽपि यदन्यमृच्छति।।

वस्तुतः **करुणालहर्या** एकैकं पद्यमनन्तकरुणाविनयार्तिव्यथासमन्वितं परिलक्ष्यते। पद्याभिव्यक्ता सा व्यथा न तावत्काल्पनिकी। पण्डितराजो यवनीं परिणीय यथा स्वयुगीनेन असहृदयब्राह्मणासमाजेन सन्त्यक्तः समुपेक्षितः पदे पदे कदर्थितश्च—तत्सर्वं पुञ्जीभूय तत्काव्यप्रतिपाद्यतामुपगतम्। सैव प्रगाढा करुणा तत्कविताजीवातुभूता। कथयति सः—

अपि शैशवलालितः शिशुः प्रतिबुद्धो जनकेन ताड्यते।
न कदापि लालितस्त्वया किमु ताड्यो भगवन् कुकर्मभिः।।

न वदामि न दुष्कृतं मया कृतमित्युक्तिमिमां तु मे शृणु।
मम भीतिमनीवशाद् विभो! पतितोद्धारक! नाम तावकम्।।

आत्मदोषान् प्रख्याप्य पण्डितराजो गङ्गाजलमिव पवित्रतायाः परां कोटिमधिरोहति। समुद्घाटितपुस्तकमिव तज्जीवनं तत्कविताभिरेव सम्यगवगन्तुं शक्यते।

पण्डितराजो जगन्नाथो न किमपि पृथुलकलेवरं महाकाव्यं चकार। तदुपज्ञा रचनाः प्रायेण लहर्य एव सन्ति। सहस्रमितानि पद्यानि तु प्रकीर्णान्येव दृश्यन्ते। तथापि तत्प्रणीतं प्रत्येकं पद्यं घटनिबद्धं सागरसलिलमिव प्रभावकरं संलक्ष्यते। भारतराष्ट्रस्य प्रत्यभिज्ञानकरा ये ये मञ्जुभावास्ते सर्वेऽपि क्रमेण तेषु पद्येषु सयत्नं गुम्फिताः। यथोदात्तराघवे मायुराजप्रणीतमेकमेव पद्यं **'रामोऽस्मि सर्वं सहे'** इति समेषामेवाचार्याणां ध्यानं रुचिश्चाचकर्ष, तेनैव प्रकारेण पण्डितराजस्याप्येकमेव पद्यं महामहिमशालिरघुनन्दनस्य हृद्व्यथां साधु प्रकाशयति—

पापं हन्त मया हतेन विहितं सीताऽपि यद्यापिता
सा मामिन्दुमुखी विना बत वने किं जीवितं यास्यति?
आलोकेय कथं मुखं सुकृतिनां किन्ते वदिष्यन्ति मां
राज्यं यातु रसातलं पुनरिदं न प्राणितुं कामये।।

(शृङ्गार. पद्य १०७)

पण्डितराजविरचितेष्वन्यापदेशेषु समग्रमेव मानवजीवनं विविधघटनाविवर्त-प्रदर्शनपुरस्सरं समवलोक्यते। पूर्वजन्मार्जिताः संस्कारा न कथमपि वारयितुं शक्याः। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाऽशुभम्। यदिदं वेदपुराणदर्शनादि-चिन्तनं तदेव पण्डितराज एकेनैव पद्येन प्रस्तौति—

किं बान्धवेन हरिणा हरिणापि किं वा
लक्ष्म्याऽपि किं सरसिजोदरजन्मना वा?
एकस्य शुद्धचरितस्य सरोरुहस्य
नैषा तुषारजनिता शमिता विपत्तिः॥

विपत्तिकाले स्वार्थसिद्धिपरायणास्तु त्वरितमेव सङ्गं परित्यजन्ति; परन्तु परमार्थप्रणयावसक्ताः सहैव जीवन्ति, सहैव म्रियन्ते। अस्मिन् सन्दर्भे अब्दुर्रहीमखानखानाभिप्रायमनुवदतो जगन्नाथकवेः सुभाषितं पूर्वमेव मया समुद्धृतं वर्तते—आपेदिरेऽम्बरपथमिति।

खलास्तावत्तिलमात्रमपि स्वार्थविरोधं न सहन्ते। तेषां सौजन्यप्रदर्शनं तु स्वार्थसाधनान्तमेव; परन्तु सुमहान्तः पुण्यपुरुषाः सर्वथा पर्वता इव निश्चलास्तिष्ठन्ति। विश्वामित्रेण वसिष्ठस्य शतपुत्रा घातितास्तथापि ब्रह्मर्षिरसौ सर्वप्रतीकारसमर्थः सन्नपि क्षमाभावं न तत्याज। इदमेवास्ति भारतराष्ट्रस्य विशिष्टं चरित्रम्। पण्डितराजो लिखति कलमव्याजेन—

अस्मानवेहि कलमानलमाहतानां येषां प्रचण्डमुसलैरवदाततैव।
स्नेहं विमुच्य सहसा खलतां प्रयान्ति ये स्वल्पपीडनवशान्न वयं तिलास्ते॥

महापुरुषसङ्गेन सर्वेऽपि दोषाः प्रक्षाल्यन्ते। सकृत् सम्मानितो मानवो न पुनः कदर्थनां भजते। अत एवास्माभिः सत्साहचर्यमेवाश्रयणीयम्। पण्डितराजमुखेनैव—

भ्रातः काञ्चनलेपगोपितबहिस्ताम्राकृते! सर्वतः
मा भैषीः कलश! स्थिरो भव चिरं देवालयस्योपरि।
ताम्रत्वं गतमेव काञ्चनमयी कीर्तिः स्थिरा तेऽधुना
नान्तस्तत्त्वविचारणप्रणयिनो लोका बहिर्बुद्धयः॥

सिंहचन्दनकर्णधारकल्पद्रुमकस्तूरिकाकार्पासादिप्रतीकमुखेन महाकविजगन्नाथ एवमेव मानवजीवनस्य विविधान् उच्चावचान् घटनासङ्घातान् उपन्यस्यति यान् पाठं

पाठं पाठकोऽसीमधैर्यं शक्तिं जिजीविषां च विन्दते। स्वार्थसिद्ध्यर्थं को न बन्धुतां प्रयाति; परन्तु विपत्तिदावानले प्रोत्थिते सति सर्वेऽपि दूरं पलायन्ते। सागरमुखेन निगदति कविः —

मह्यं श्रीरिति शार्ङ्गभृत् त्रिदशराट् चिन्तामणिर्मह्यमि-
त्यब्जो मह्यमितीश्वरः सुरगणो मह्यं सुधा चास्त्विति।
सर्वे सन्त्यपहर्तुमेव जलधेः सर्वस्वमेनं रुषा
हन्ताचामति तापसे न गदितुं कोऽप्यस्ति तन्मास्त्विति।।

स एव सागरः कदाचिन्निर्गुणस्सन् निन्दापात्रतामपि याति। तद्यथा—

आस्तां तावदहो समुद्रमहिमा दूरे तु कर्णप्रिय
स्तीरे यस्य पिपासयैव मरणं प्राप्नोति शीघ्रं जनः।
तस्मादम्बुनिधेर्वरं लघुसरः कूपोऽथवा वापिका
यत्र स्वीयकरद्वयेन सलिलं पेपीयते स्वेच्छया।।

सत्पुरुषा अपि कदाचिद् दुष्टानतिसन्धानपरायणान् लालाटिकान् पुष्णन्ति स्वपक्षधरान् विहाय। तद्विषये कथयति पण्डितराजः—

येऽमी आमुकुलोद्गमात् प्रतिदिनं त्वामाश्रिताः षट्पदा-
स्ते भ्राम्यन्ति फलाद्बहिः कथमहो दृष्ट्वा न सम्भाषसे।
ये कीटास्तव दृक्पथं न च गतास्ते त्वत्फलाभ्यन्तरे
धिक्त्वां चूततरो! पराऽपरपरिज्ञानानभिज्ञो भवान्।।

समाजे विचित्रमेव दशावैपरीत्यं समवलोक्यते। गुणवन्तस्सीदन्ति, निर्गुणाश्च प्रसीदन्ति। सनातनीयं परिपाटी। गर्दभमवलम्ब्य व्यनक्ति कविः स्वकीयां वेदनाम्। तद्यथा—

यद्यपि का नो हानिः परकीयां चरति रासभे द्राक्षाम्।
असमञ्जसमिति मत्वा तथापि खलु खिद्यते चेतः।।

एभिः प्रमाणैः सर्वथा स्फारीभवति पण्डितराजस्य जीवनधारा। स खलु इस्लामधर्मछत्रच्छायामङ्गीकुर्वन्नपि स्वकीयां वैष्णवीं प्रवृत्तिं न कदापि तत्याज। सद्गुणकल्पद्रुमभूतान् जहाँगीरशाहजहानासफखानादीन् मुस्लिमसंरक्षकान्

स्वकीयया निसर्गरम्यया कवितया मण्डयन्नपि आत्मपरितोषार्थमसौ नन्दनन्दनं कृष्णं, दशरथनन्दनं रामं, प्रलयङ्करं शिवं, प्रभविष्णुं विष्णुं, लोकप्रबोधकरं दिनकरं, देवनदीं मोक्षदात्रीं भगवतीं भागीरथीं, लक्ष्मीं, कालिन्दीं च परया भक्त्याऽऽनर्च।

वस्तुतस्तस्य काव्यमासीदुभयोर्धर्मयो: सङ्गमस्थलम्। तत्काव्यरसास्वादो **मुस्लिमभागवतानां** कृतेऽपि तथैव हृदयानन्दकर आसीद्यथा हिन्दुमतावलम्बिनां कृते। एतावन्मात्रेणाऽत्र विरम्यते।



# वेदानां व्याख्याने भाषावैज्ञानिकमुन्मीलनम्

**डॉ. कपिलदेवपाण्डेयः**
संस्कृतविभागाध्यक्षचरः
आर्यमहिलामहाविद्यालयस्य
वाराणसी



अशेषविश्वज्ञानविज्ञानराशिभूता वेदाः खलु भारतीयवाङ्मयेतिहासेऽनितरसाधारणं गौरवं बिभ्रति, प्राचीनतमत्वादपौरुषेयत्वाच्छाश्वतिकमूल्यवत्त्वाच्च तत्प्रतिपादिता अर्था नितरां दुरूहा इत्यत्र न कोऽपि संशयावसरः। अतिप्राक्तनत्वात् सन्दर्भसमन्वयः, भावगाम्भीर्यं, व्यवहारातीताया भाषाया दुर्बोधता च तदर्थावबोधे निरतिशयं काठिन्यमुपस्थापयन्ति। कस्यचिन्मन्त्रस्य किमस्ति वास्तविकं तात्पर्यमिति वेदार्थबोधविषयिण्याः समस्यायाः समाधानं वेदा एव प्रस्तुवन्ति। अतः एवं प्रतीयते यन्न केवलं प्रतिपाद्यविषयगतप्रामाण्य एव वेदानां स्वतः प्रामाण्यम्, अपि तु तेषां व्याख्यानेऽपि। वैदिकवाङ्मयस्य चतुर्ष्वपि भागेषु—संहितासु, ब्राह्मणेषु, आरण्यकेषु, उपनिषत्सु—वेदाङ्गानां चतुर्षु शिक्षायां, निरुक्ते, व्याकरणे, छन्दसि, प्रतिशाखं विद्यमानेषु प्रातिशाख्यग्रन्थेषु च न्यूनाधिकरूपेण सर्वत्र भाषावैज्ञानिकचिन्तनविषयिणी प्रवृत्तिर्लभ्यते। तत्र प्रतिपादितान् सिद्धान्तानुपेक्ष्य कापि वेदार्थव्याख्यानपद्धतिर्वेदार्थान् बोधयितुं न प्रभवति। वेदार्थबोधे रामायण-महाभारतयोरितिहासग्रन्थयोरपि भूयसी उपकारकता वर्तते। यथा चोक्तम्—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति॥

मीमांसाशास्त्रन्तु सहस्राधिकैरधिकरणैर्न्यायैर्वाक्यभेदादिदोषैर्वेदवाक्यान्येव यथायथं बोधयति। वेदार्थबोधे मन्वादीनां स्मृतीनां पुराणानां च महती उपयोगिताऽनुभूयते वेदार्थं वेत्तुकामैः। अत एव कल्पतरुकारोक्तिः 'श्रुतिः लौकिकमुपायं न सहते' इति सङ्गच्छते। अतो भाषावैज्ञानिकदृशा वेदार्थं विचारयतो मम त्वियमेव धारणाऽस्ति यद् वेदानां वास्तविकं तात्पर्यं वैदिकैरेव भाषाविज्ञाननियमैः सम्यगवगन्तुं शक्यते। आधुनिकेन पाश्चात्त्येन भाषाविज्ञानविधिना वेदव्याख्यानं नोचितं, यतो हि जन्मैव शतद्वयवर्षपूर्वमष्टादशशताब्द्यामभवत्।

इतिहासातीतात् प्राप्तेषु वेदमन्त्रेषु निहितान् निगूढान् अर्थान् प्रति आधुनिकभाषाविज्ञानस्य वराकस्य गतिरेव नास्ति। तत्तु वेदवाक्यानि ऐतिहासिकदृष्ट्या तुलनात्मकदृष्ट्या च वैज्ञानिकसामाजिकसन्दर्भान् मन्त्रतात्पर्यैः सह समन्वयितुं प्रवर्तते प्रयतते च। यदि भाषाविज्ञानं वस्तुतो विज्ञानमस्ति, तर्हि तद्विना कस्यचिदपि शब्दराशेर्व्याख्यानं नैव सम्भवति। अत एव मन्त्र-ब्राह्मणारण्यकोपनिषत्सु वेदाङ्गेषु च भाषातत्त्वविषयका ये सङ्केताः सङ्केतिताः सन्ति, तेऽपि भाषाविज्ञानपदेनैव व्यपदेश्याः। ते सङ्केताः, निरुक्तम्, पाणिनीयं व्याकरणम्, मीमांसाशास्त्रञ्च समेषां व्याख्यानानामुपजीव्यभूतानि। निरुक्तिपरा व्याख्यानपद्धतिर्भवतु, सायण-उव्वट-महीधरादीनां पद्धतिर्भवतु, दयानन्दीया पद्धतिर्भवतु, अरविन्दकृता वा पद्धतिर्भवतु, समासामुपकारकं भाषाविज्ञानमेव।

आधुनिकेन पाश्चात्त्यभाषाविज्ञानेन या व्याख्यानपद्धतिः प्रवर्तिता, तत्राप्यस्ति किमपि नावीन्यं, किमपि विज्ञानसम्मतं प्रामाण्यं, कापि युक्तियुक्तता। प्राचीनैर्भाष्यकारैः परम्परानुसारं यज्ञपरकाणि अध्यात्मपराणि च व्याख्यानानि विहितानि, यतो हि तदानीं समाजस्य प्रवृत्तिस्तादृशी आसीत्। और्णनाभो व्याचष्टे 'नासत्यौ' इति 'सत्यं च अनृतञ्च' इति, आग्रायणो व्याचष्टे—'सत्यस्य प्रणेतारौ' इति। यास्कानुसारेण तु 'नासिकाप्रभवौ' इति। एवंविधानि बहूनि उदाहरणानि सन्ति यत्र प्राचीना व्याख्यातार एकमतयो नावलोक्यन्ते। अत एव वेदानां भाषावैज्ञानिकव्याख्यातृषु अग्रगण्यः 'राथ'महोदयो व्याख्यानस्य नवीनां समीक्षात्मिकां पद्धतिं समुपस्थापितवान्। सूक्ष्मतया तुलनाद्वारा रूपतस्तत्त्वतश्च सदृशानां शब्दानां सङ्कलनेन सन्दर्भगतं, व्याकरणगतं, व्युत्पत्तिगतं चान्तःसाक्ष्यं समीक्ष्य, ऐतिहासिकं बाह्यसाक्ष्यं चानुपेक्ष्य अवेस्ताप्रभृतिभिर्भाषान्तरैः सह सम्बन्धं संयोज्य च व्याख्यानमुपक्रान्तं तेन। भारतीयभाष्यकाराणां तथ्यानां निष्कर्षणाञ्चावमूल्यनं विदधतस्तस्य व्याख्यानं वैयुत्पत्तिकं महत्त्वं सर्वातिशयेन बिभर्ति। परवर्तिषु भारतीयव्याख्याकारेषु प्रतिक्रियापि काचिज्जाता। तत्परिणामरूपेण तैर्भारतीयसभ्यतायाः संस्कृतेश्च उत्कर्षोऽपि अधिकतरं ख्यापितः। भाषावैज्ञानिकानां व्याख्याकाराणां कृते सौविध्यमिदमासीद्, यत् पारम्परिकी व्याख्यासमृद्धिस्तु सुलभैवासीत्, तुलनात्मिका ऐतिहासिकी शोधपद्धतिरपि सहायिकासीत्, या भारतीयव्याख्यातॄणां कृते तिरोहितासीत्। तुलनात्मकेन भाषातत्त्वेन सह तुलनात्मकधर्मस्य तुलनात्मकपुराकथाशास्त्रस्य च उपलम्भावसर एव नासीत्।

आधुनिका व्याख्यातारो मन्यन्ते यद् वेदेषु देवानां दैत्यानां च प्रकाशान्धकारशक्त्योर्मानवीकरणम्। द्वादश आदित्या द्वादशमासरूपाः। तैः स्वच्छन्दतया भारतीयपरम्परामजानद्भिरानेकेषां पदानां भ्रान्तिपूर्णा व्याख्या कृता। यत्र क्वचित् पाठभेदस्यापि कल्पना कृता। ते न जानन्ति यद् वेदानां पाठा ऋषिभिर्बहुभिः

प्रयत्नैः स्वर-पदपाठ-विकृतिपाठादिभिर्यथावद् अद्य यावत् संरक्षिताः। तेषामर्थानुसन्धानविधौ बहुषु दोषेषु सत्स्वपि बहवो गुणा अपि सन्ति।

स्थालीपुलाकन्यायेनात्र भाषाविज्ञानविधिना विहितानि कानिचिद् व्याख्यानानि प्रस्तूयन्ते—

१. ऋग्वेदस्य प्रथममण्डलस्थे उषःसूक्ते उषसामेकं विशेषणपदं 'विश्वसुविदः' इति वर्तते। तत्र सायणो व्याचष्टे 'कृत्स्नस्य धनस्य सुष्ठु लम्भयित्र्यः' इति। समध्वनिलोपनियमम् (Haplology) अनुसृत्य ब्लूमफील्ड-जेल्डनरमहाभागौ तत्र 'विश्ववसुविदः' इति मत्वा व्याचक्षाते। तत्रैव 'सूनृताः' (प्रियहितवाचः) इत्यस्य व्युत्पत्तिं सन्दिग्धां मत्वा यथायथमर्थं स्वीकुर्वन्ति।

२. तस्मिन्नेव सूक्ते एकस्मिन् मन्त्रे 'उच्छात्' इति प्रयोगो वर्तते। अपरत्र 'उच्छत्' इति। उच्छात् = व्युच्छति प्रभातं करोतीति सायणः। अत्र विवासार्थकाद् 'उच्छी'-धातोः 'प्रभातं करोति' इति कथम्? भाषावैज्ञानिकाः √वस् to shine, इत्यतः Pres. subjund इति निर्दिशन्ति। उच्छत् इत्यत्र √वस् to shineinjund इति च। सायणस्तु 'उछी विवासे' इति धातोः 'लङि' रूपं मन्यते। अत्र उभावपि व्याख्यातारौ चिन्त्यौ। एवमेव 'व्युष्टौ' √वश् कान्तौ इति धातोः √वश् to shine desire इति अर्थयोः कथं सङ्गतिः। 'उश्मसि' इत्यत्र √वश् to wish इति ध्वनिसाम्यं नूनं ध्येयम्।

३. वरुणसूक्ते प्रयुक्तम् 'दृशेयम्' इति पदं पाणिनिः आशीर्लिङि शपं प्रबाध्य अङ्प्रत्ययं विधाय साधयति। भाषावैज्ञानिकास्तु 'अङ्'- महिम्ना a-qorist मूलं (base) परिकल्प्य विधिलिङि साधयन्ति। 'दृश्'धातुः 'पश्य'धातुश्च द्वावपि स्वतन्त्रधातू कल्पनीयौ। दृशः स्थाने सार्वधातुकलकारेषु 'पश्य' इति आदेशपरिकल्पनं नोचितम्। पादीनां स्थाने पिबादयः, हनादीनां स्थाने वधादीनामादेशा न कल्पनीयाः, अपि तु उभयानपि स्वतन्त्रधातून् मत्वा तेषां पृथक् पृथग् रूपस्थलभूताः प्रत्यया निर्धारणीयाः। यथा 'अस्तेर्भूः' इति व्यवस्थायां सत्यामपि अस्धातोः भूधातुः पृथग् इति अभ्युपगम्यत एव। 'हृग्रहोर्भश्छन्दसि' इति नियमेन हृधातोः भत्वविधानं व्यर्थमेव, यदि भूधातुः पृथग्वर्तत एव। एवं वदन्ति भाषावैज्ञानिकाः।

४. Infinitive इति व्यपदेशभाजां तुमर्थप्रत्ययान्तानां चतुर्धा विभागः—
१. Dative—एतवे, कर्तवे, वातवे, इत्यै, स्तवध्यै।
२. Accusitive—(द्वितीयान्तप्रतिरूपक)-दातुम्, प्रष्टुम्, कर्तुम्, आरभम्।
३. Ablative genitive—(पञ्चम्यन्त-षष्ठ्यन्तप्रतिरूपक)-अतिस्कदः, कर्तोः, एतोः। ४. Locative—(सप्तम्यन्तप्रतिरूपक)-सन्दृशि, सञ्चक्षि, गृणीषणि।

पाणिनीये तन्त्रे एकस्मिन्नेव बहूनां गणना कृतास्ति, तुमर्थे सेसेनसेऽसेन् इत्यादौ। शेषाणां कृते अन्यान्यपि सूत्राणि यथावश्यकं सन्ति।

५. सार्वधातुकार्धधातुकविभागं विहाय भाषावैज्ञानिकैः क्रियारूपसंरचनायाश्चत्वारो विभागाः कृताः, यथा उत्सूत्राणां वैदिकप्रयोगाणां सङ्गतिरुपपाद्येत। ते विभागाः सन्ति—

१. Present Base (वर्तमानकालिक आधारः)
२. Perfect Base (लिडात्मक आधारः)
३. Aorist Base (लुङात्मक आधारः)
४. Future Base (भविष्यकालिक आधारः)

सर्वत्र अवस्थानां (Mood) व्यवस्था कृता। वर्तमानकालिकेन आधारेण लट्-लङ्-लोट्-लेट्-लिङ् (विधि)लकाराणां शतृशानचोश्च व्यवस्था वर्तते। लिडात्मके आधारेऽपि Injuctive mood लिङ्लकारस्य च व्यवस्था कल्पिता वर्तते (इन्द्रस्य नु वीर्याणि प्रवोचम्, बभूयात्)। क्वसु-कानचोरप्यत्रैव सन्निवेशोऽस्ति। (आवस्थिवांसौ, ईणानः)। Aorist आधारितक्रियापदानां सिद्धौ च्लेः सिच्, अङ्, चङ्-क्सप्रभृतिभ्य आदेशेभ्यस्त्राणमवाप्तुं ग्रीकव्याकरणानुसारेण नवीना विभागा विहिताः। तद्यथा—




भविष्याधारिते भेदे लृट्-लुटोः सन्निवेशो जातोऽस्ति। लुट्लकारस्य प्रयोगः ऋङ्मन्त्रेषु नोपलभ्यते। वेदेषु प्रयुक्तानां क्रियाणां लकारनिष्पन्नानां कृन्निष्पन्नानां च पाणिनिभिन्नविधिना भाषावैज्ञानिकैर्व्यधायि। तत्र क्वचित् क्वचित् स्खलितयः सन्ति। परन्तु तुलनात्मकदृष्ट्या समीक्षात्मकदृष्ट्या चाधुनिकभाषाविज्ञानविदां प्रयासोऽतितरां सार्थक्यमावहति। तेषां प्रयासस्यैव फलं यद् अद्य विश्वक्षितिजे समादरभावनया वैदिकं वाङ्मयमधीयमानं वर्तते। वेदाध्ययने काचिद् गतिरायाता। इति शम्।

●

# ब्राह्मणग्रन्थानां लोकदृष्टिः

**डॉ. हरीश्वरदीक्षितः**

उपाचार्यो विभागाध्यक्षश्च, संस्कृतविभागस्य,
राजाहरपालसिंहस्नातकोत्तरमहाविद्यालये,
सिगरामऊ, जौनपुरम्



मानवस्तु तस्या एव शक्तेरंशभूतो यया सम्पूर्णमिदं स्थावरजङ्गमात्मकं जगत् परिचाल्यते। इष्टस्य प्राप्तिः, अनिष्टस्य परिहार एव प्रधानं लक्ष्यं मानवजीवनस्य। अस्य लक्ष्यस्य प्राप्तये विश्वस्य प्राचीनतमे वाङ्मये वेदे विपुलं ज्ञानं प्राप्यते। वेदस्य निर्देशा उपदेशाश्च सन्ति मानवस्य जीवनसाफल्याय परं साधनम्। वेदोपदेशान् व्यवहारे आचरन् पुरुषो धर्मार्थकाममोक्षाणां पुरुषार्थानां प्राप्तये सुतरां समर्थो भवति। 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति वचनाद् ब्राह्मणभागोऽस्ति वेदस्यैको भागः। अत्र वेदस्य यज्ञपरकं व्याख्यानमुपलभ्यते। विधिनिषेधार्थवादेतिहासपुराणैश्च ब्राह्मणेषु यज्ञकर्मणां विविधानि फलानि निर्दिष्टानि। इत्थं ब्राह्मणानि पुरुषं सत्कर्मसु प्रेरयन्ति। इयमेव ब्राह्मणानां लोकदृष्टिः, या विविधेषूपदेशपरेषु वाक्येषु स्फुटीभवति।

ब्राह्मणेषु यज्ञस्यैव माहात्म्यं प्रतिपादितम्। तत्र स्पष्टमेवोक्तमस्ति—'यज्ञो वै श्रेष्ठतमं कर्म'[१]। काठकसंहितायामपि[२] वचनमिदं प्राप्यते। यज्ञस्तु प्रजापतेरेव रूपमित्यपि उद्घुष्टं ब्राह्मणेषु दृश्यते। शतपथब्राह्मणे कथितमेव 'एष वै प्रत्यक्षं यज्ञो यत्प्रजापतिः'[३]। अग्निहोत्रादारभ्याश्वमेधपर्यन्तं सर्वं कर्म प्रजापतेरेवाराधनम्। प्रजापतिरेव प्रजानां रक्षकः। यज्ञस्यापि पतिः स एव। अग्नये प्रदत्तं हविर्वायुना सह सूर्यं प्रति गच्छति, तदनन्तरं सम्पूर्णेऽन्तरिक्षे व्याप्तं भवति। सूर्यस्य प्रभावेण मेघमण्डलैः सह मिश्रीभूय हविरिदं वृष्टेः कारणं भवति, येनान्नस्योत्पत्तिर्भवति। अन्नेनैव प्रजानां रक्षणं पोषणञ्च भवति। हविषा पार्थिवानां पदार्थानामाकाशस्य वायोः सूर्यरश्मीनाञ्च शुद्धिर्जायते। हविषैव देवास्तृप्तिं यान्ति, तृप्ताश्च ते मानवस्य

१. शतपथब्रा., १।७।१।५; २. काठकसंहिता, ३०।१०।
३. शतपथब्रा., ४।३।४।३।

कल्याणाय कल्पन्ते। यज्ञोद्भूतैः पुण्यैर्यज्ञकर्त्ता स्वर्गं प्राप्नोति। यज्ञै-र्देवार्चनं कृत्वा पुरुषो मोक्षं विन्दते।

'सर्वस्मात् पाप्मनो निर्मुच्यते य एवं विद्वानग्निहोत्रं जुहोति'[१] इति शतपथब्राह्मणस्य वचनम्। अन्यत्रापि ब्राह्मणवाक्यमिदं प्राप्यते 'सर्वां ह वै पापकृत्यां सर्वां ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते'[२]। प्रथमतो मन्त्रपाठ-श्चित्तशुद्धिं जनयति। एतदतिरिक्तं यज्ञैर्मन्त्रपाठेन च वायुमण्डले परिवर्तनं भवति, निखिले विश्वे धर्मचक्रस्य प्रवर्तनञ्च भवति। समेषां पृथिव्याकाशमानवानां पावनं साधनमिदं यज्ञकर्म।

'अग्नेर्वै धूमो जायते, धूमादभ्रमभ्राद् वृष्टिः'[३] इति शतपथब्राह्मणस्य वचनम्। अग्नेः तापाद् वा धूम उत्पद्यते, धूममण्डलैर्भवति मेघानां निर्माणम्, मेघा वृष्टिप्रदायकाश्च। ऐतरेयब्राह्मणे[४] वचनमिदं प्राप्यते 'विद्युद्धीदं वृष्टिमन्नाद्यं सम्प्रयच्छति' इति। अस्यायमेवार्थो यद् विद्युतताप एव वृष्टेः कारणं भूत्वा अन्नादिखाद्यपदार्थान् मनुष्येभ्यो ददाति। तैत्तिरीयसंहितायां (२।४।९।१०), मैत्रायणीसंहितायां (२।४।८), काठकसंहितायां (११।१०) चायमेव सिद्धान्तः प्रतिपादितः। शतपथब्राह्मणानुसारं[५] वायोः प्रभावादेव मेघा जायन्ते। अत एव मरुत एव राजन्ते वृष्टेरिति तात्पर्यं ब्राह्मणस्यास्य—'मरुतो वै वर्षस्येशते'[६]। अत एव वायुमेवानुसरति वृष्टिः 'तस्माद्यां दिशां वायुरेति तां दिशां वृष्टिरन्वेति'[७]।

यज्ञैः शोधितं वृष्टिजलमन्यज्जलमन्नानि च पावयति। शुद्धेनान्नेन शुद्धेन च जलेन शरीरमपि शुद्धं स्वस्थञ्च भवति। अत एवोक्तं 'वृष्टिकामो यजेत'।

जीवने दृढेन निश्चयेन सहाक्लान्तं समुन्नतये पुरोगमनमेवोपदिष्टम् ऐतरेयब्राह्मणस्य गाथायामस्याम्—

चरन् वै मधु विन्दति चरन् स्वादुमुदुम्बरम्।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरन् चरैवेति[८]॥

यथा सूर्यः सततं गतिशीलः सन् जगति पूज्यतां व्रजति, तथैव यः पुरुषो गतिशीलः स्वकार्येषु तन्द्रारहितः सततं यत्नशीलश्च स एव मधु कर्मणां मनोहरं फलं वा प्राप्नोति।

---

१. शतपथब्रा., २।३।१।६;
२. तदेव, १३।५।४।१।
३. ऐतरेयब्रा., १।४।३;
४. शतपथब्रा., ५।३।५।१७।
५. तदेव, १।८।३।१२;
६. तदेव, ९।१।२।५।
७. तदेव, ८।२।३।५;
८. ऐतरेयब्रा., ३३।३।१५।

स्वर्गलोकस्य विषये ब्राह्मणानां वचनमिदम्—'सहस्राश्वीने वा इतः स्वर्गो लोकः'[१]। लोकोऽयं देवैर्यज्ञैः श्रमेण तपोभिराहुतिभिश्च प्राप्तः। 'देवा वै यज्ञेन श्रमेण तपसाऽऽहुतिभिः स्वर्गलोकमायन्'[२]। पुण्यकर्माण एव स्वर्गं प्राप्नुवन्ति—'ये हि जनाः पुण्यकृतस्ते स्वर्गं लोकं यन्ति'[३]। लोकानां विषये ब्राह्मणस्योक्तिरियमेव—'त्रयो वा इमे लोकाः'[४], पृथिव्यन्तरिक्षं द्यौः'[५]। समेषामेषां लोकानां रक्षकः प्रजापतिः। 'प्रजापतिर्वा अमृतः'[६]। ब्राह्मणानां दृष्ट्या प्रजापतिरेव परमात्मा, अमरोऽनादिश्च। प्रजापतिरग्रे आसीत्, स एकाकी आसीत्, तस्मिन् सिसृक्षा समुत्पन्ना—'प्रजापतिर्वा इदमग्र आसीत्। एक एव सोऽकामयत'[७]। मनसैव मनुष्यस्तं प्रजापतिमाप्नोति। 'मनसैवैनमाप्नोति'[८]। वचनमिदमुपनिषत्सु बहुश उपदिष्टम्[९]।

मोक्षो मुक्तिर्वा जगति जन्ममरणबन्धनाद् मुक्तिरेव। यज्ञाग्निहोत्रमपि मुक्तये कल्पते। उक्तञ्च—'पुनर्मृत्युं मुच्यते य एवमेतामग्निहोत्रे मृत्योरतिमुक्तिं वेद'[१०]। एवमन्यत्राप्युपदिष्टमस्मिन् ब्राह्मणे यद् योऽग्निचयनं सम्पादयति, सः पुनर्मृत्युं जयति[११]। सः पुनर्मृत्युजयेन सह ब्रह्मात्मैक्यमपि प्राप्नोति—'पुनर्मृत्युं मुच्यते गच्छति ब्रह्मणः सात्मताम्[१२]। अत्रैव इदमपि कथितं यदात्मन्येव सर्वे प्राणाः प्रतिष्ठिताः[१३]। वर्त्तमानकालिकानां शरीरशास्त्रिणां मते मनुष्यः प्रतिदिनं चतुर्विंशतिघटिकासु २१६०० वारं श्वासक्रियां करोति। शतपथब्राह्मणस्याप्येतादृशं मतम्[१४]।

'शतायुर्वै पुरुषः' इति कौषीतकिब्राह्मणवचनम्[१५]। शतपथब्राह्मणस्तु[१६] अतो दीर्घतरं कालं मनुते पुरुषजीवनस्य—'अपि हि भूयांसि शताद्वर्षेभ्यः पुरुषो जीवति। यः अग्निहोत्री सः पूर्णायुरभ्येति'[१७]। यः प्रतिदिनं वारद्वयं मिताहारेण वर्तते

---

१. ऐतरेयब्रा., २।१७; २. तदेव, ३।४२।
३. शतपथब्रा., ६।५।४।८; ४. तदेव, १।२।४।२०।
५. तदेव, ११।५।८।१; ६. तदेव, ६।३।१।१७।
७. तदेव, ६।१।३।१; ८. काठक., २९।६।
९. बृहदारण्यकोपनिषद्, ४।११, कठवल्ली, ४।११।
१०. शतपथब्रा., २।३।३।९; ११. तदेव, १०।१।४।१४।
१२. तदेव, ११।५।६।९; १३. तदेव, ११।२।१।२।
१४. तदेव, १२।३।२।८; १५. कौषीतकिब्रा. ११।७।
१६. शतपथब्रा., १।९।३।१९; १७. तदेव, २।१।४।९।

सोऽपि पूर्णायुः प्राप्नोति[१]। हिरण्यधारणादपि आयुषो वृद्धिर्भवतीत्यथर्ववेदस्य कथनम्[२]।

ब्राह्मणेषु व्याधीनामुत्पत्तीर्निर्दिश्य तेषां विनाशोपाया अपि वैज्ञानिकरीत्या प्रतिपादिता दृश्यन्ते[३]। कौषीतकिब्राह्मणे[४] गोपथब्राह्मणे[५] च व्याधीनामुत्पत्तिर्विशेषेण ऋतुसन्धिषु भवतीति वचनं प्राप्यते। रोगाणां कीटाणवो यज्ञियेनाग्निना नश्यन्तीत्यपि शतपथब्राह्मणस्योक्तिः[६]। हिरण्यन्तु सारभूतमग्नेः[७], कीटाणुविनाशकञ्च[८]। अनेनैव कारणेन आर्येषु कर्णयोः स्वर्णनिर्मितकुण्डलयो-र्धारणं प्रचलितमासीत्। सूर्यस्य रश्मयः[९], वेदविदो विद्वांसः[१०], साममन्त्रपाठकाश्च[११] कीटाणुविनाशका भवन्तीति ब्राह्मणवचनम्। शुद्धं जलं रोगनाशकमिति तैत्तिरीयब्राह्मणस्योक्तिः[१२]।

स्त्रीणां विषये विविधा आचारा उपदिष्टाः सन्ति ब्राह्मणेषु। स्त्रीसमीपे पुरुषस्य, पुरुषस्य समक्षं स्त्रिया वा भोजनग्रहणं निषिद्धमस्ति[१३]। स्त्रीसमीपे भोजनग्रहणमकुर्वन् पुरुषो बलशालिनः पुत्रस्य जनको भवतीति शतपथब्राह्मणस्य कथनम्। पुत्रस्य महत्त्वं सर्वातिशायि वर्तते, यतो हि अपुत्रः स्वर्गलोकं पितृलोकं वा न भजते[१४]। वार्धके पुत्र एव पितू रक्षक आश्रयो वा भवति। अस्यामवस्थायां पुत्रस्य महत्त्वमनुभूयैव शतपथब्राह्मणेनोक्तम्—'तस्मादुत्तरवयसि पुत्रान् पितोपजीवति'[१५]। पिण्डदानक्रियार्थमपि पुत्र एव प्रथमोऽधिकारी भवति, अनेन हेतुनापि पुत्रस्य सर्वातिशायि महत्त्वमस्ति।

बहुश उल्लेखाः सन्ति ब्राह्मणेषु स्त्रीविषयकाणां नियमानाम्। सुन्दरी स्त्री प्रियेति शब्देन ख्याता। 'तस्माद् रूपिणी युवतिः प्रिया भावुका'[१६]। कीदृशी स्त्री सुन्दरी भवतीति विमर्शो दृश्यते शतपथब्राह्मणस्य वचनेऽस्मिन्—'पश्चाद् वरीयसी पृथुश्रोणिरिति वै योषां प्रशंसन्ति'[१७]।

---

१. शतपथब्रा., २।४।२।६;
२. मैत्रायणीसंहिता, १।९।५।
३. अथर्ववेदः, १।३५।२;
४. कौषीतकिब्रा., ५।१।
५. गोपथब्रा. उत्तरार्द्धे, १।१९;
६. शतपथब्रा., १।२।१।६।
७. तदेव, १४।१।३।२९;
८. तदेव, १४।१।३।२९।
९. तदेव, १।३।४।८;
१०. तदेव, १।१।४।६।
११. तदेव, ४।४।५।६;
१२. तैत्तिरीयब्रा., ३।२।३।१२।
१३. शतपथब्रा., १०।५।२।९, १।९।२।१२;
१४. नापुत्रस्य लोकोऽस्ति। (ऐतरेयब्रा. ७।१३)
१५. शतपथब्रा., १२।२।३।४;
१६. तदेव, १३।१।९।६।
१७. तदेव, ३।५।१।११।

स्त्रीसौन्दर्यविषये शतपथब्राह्मणस्योक्तिरियं ध्यातव्याऽस्ति—'एतद्वै योषायै समृद्धं रूपं यत् सुकपर्दा सुकुरीरा स्वौपशा'[१]। पत्नी वस्तुतस्तु भवत्यर्द्धाङ्गिनी। तैत्तिरीयब्राह्मणस्यात्र कथनमस्ति—'अथो अर्द्धो वा एष आत्मनो यत्पत्नी'[२]। पत्नीहीनस्य यज्ञकर्मस्वपि न भवत्यधिकारः[३]। लक्ष्मीरूपेण तिष्ठन्ति लोकेऽस्मिन् पत्न्य इति तैत्तिरीयब्राह्मणस्य कथनम्[४]। एवमेव स्त्रीषु ये दोषा दृश्यन्ते, तेषां निन्दाऽपि ब्राह्मणेष्ववलोक्यते। 'मोघसंहिता एव योषा तस्माद्य एव नृत्यति यो गायति तस्मिन्नेवैता निमिश्लतमा इव' इति शतपथब्राह्मणस्य वचनम्[५]। एतादृशं वचनं मैत्रायणीसंहितायामपि लभ्यते[६]। ऊर्णासूत्रनिर्माणं कार्पाससूत्रनिर्माणञ्चासीद् ब्राह्मणकाले स्त्रीणां कार्येषु महत्त्वपूर्णं कार्यमेकम्। उक्तञ्च—'तद्वा एतत्स्त्रीणां कर्म यदूर्णासूत्रम्'[७]। सत्यपि स्त्रीणां महत्त्वे पुरुषजीवने परिवारे समाजे वा कन्यायाः जन्माभिनन्दनीयं नासीदिति स्पष्टमेव दृश्यते मैत्रायणीसंहितायाम्[८]। सभासु पुरुषाणामेवोपस्थितिरनुमताऽपेक्षिता चासीत्, न तु कथमपि स्त्रीणाम्[९]। गृह एव आसीत् तासां प्रतिष्ठा. अत एव तासां गृहाद् बहिर्गमनं प्रतिषिद्धमासीत्। स्त्रीणां वधो निन्दितोऽस्ति ब्राह्मणेषु[१०]।

वैदिके धर्मे सत्यस्य सर्वातिशायि महत्त्वं सर्वत्र दृश्यते। सत्यभाषणं, सत्यसङ्कल्पः, सत्कर्मणामाचरणमित्येव सन्ति विषया वैदिकोपदेशानाम्। आर्याणां जीवने असत्यभाषणमासीत् सर्वाधिकं निन्दितं कर्म। शतपथब्राह्मणस्य वचनमिदम्—'अमेध्यो वै पुरुषो यदनृतं वदति'[११]। असत्यभाषणस्य कश्चिदपि प्रभावो न जायते। ताण्ड्यमहाब्राह्मणे असत्यविषये कथितमस्ति—'एतद्वाचश्छिद्रं यदनृतम्'[१२]। यो हि असत्यभाषणं करोति, तस्य श्रीः प्रतिदिनं क्षीणा भवति। तस्य पापानां भवत्यनुदिनं वृद्धिः। 'तस्य कनीयः कनीय एव तेजो भवति श्वः पापीयान् भवति तस्मादु सत्यमेव वदेत्'[१३]।

---

१. शतपथब्रा., ६।५।१।१०; २. तैत्तिरीयब्रा., ३।३।३।५।
३. अयज्ञो वा एष योऽपत्नीकः। (तैत्तिरीयब्रा., २।२।२।६)
४. श्रिया वा एतद्रूपं यत्पत्न्यः। (तैत्तिरीयब्रा., २।९।४।७)
५. शतपथब्रा., ३।२।४।६; ६. मैत्रायणीसंहिता, ३।७।३।
७. शतपथब्रा., १२।७।२।११; ८. मैत्रायणीसंहिता, ४।६।४।
९. तदेव, ४।७।४;
१०. न वै स्त्रियं घ्नन्ति। (शतपथब्रा. ११।४।३।२)
११. शतपथब्रा., ३।१।३।१८; १२. ताण्ड्यब्रा.,. ८।६।१३।
१३. शतपथब्रा., २।२।२।१९।

यज्ञार्थं दीक्षिताय बहवो नियमा उपदिष्टा ब्राह्मणेषु। तेन तु केवलं सत्यमेव वेदितव्यम्। तस्य कृते मांसभक्षणं स्त्रीगमनञ्च सर्वथा वर्जितमस्ति[१]। सत्यमेव पुरुषं स्वर्गं गमयति[२]। त्रयो वेदा एव सत्यम्[३]। सततमजेयो भवति सत्यवादी[४]। मदपानं पतनस्य कारणमिति ब्राह्मणानां मतम्[५]। मैत्रायणीसंहितायां काठकसंहितायामपि मदपानं भृशं निन्दितमस्ति। रोगा अपि पाप्मनो लक्षणम्। काठकसंहिताया वचनमिदम्—'पाप्मनैव गृहीतो य आमयावी'[६]। परधनापहरणं लुण्ठनं वा घोरं पापम्[७]। अपशब्दभाषणैः कस्यचित्तिरस्कारोऽपि पापकर्म[८]। सर्वेषां पापकर्मणां प्रायश्चित्तान्युपदिष्टानि सन्ति। सर्वथाभिमानस्याहङ्कारस्य च त्यागः कर्तव्यः। शतपथब्राह्मणे वाक्यमिदं प्राप्यते—'तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः'[९]।

ब्राह्मणेषु ये उपदेशाः कृताः, ते सर्वे मानवस्योत्थानाय परमावश्यकाः सन्ति। शास्त्रेषु पुराणेषु च एतेषामुपदेशानामेव विस्तरो दृश्यते। न किञ्चिदपि विद्यते एतेषु विज्ञानविरुद्धं विवरणम्। ब्राह्मणेषु राज्ञां मुनीनाञ्च विषये अनेकानि आख्यानानि सन्ति, येषां विकासो विस्तरश्च पुराणेषु दृश्यते। वस्तुतस्तु ब्राह्मणग्रन्थाः सन्ति भारतीयायाः संस्कृतेः अक्षय्यः कोशः, अस्माकं प्राचीनस्य श्रेष्ठस्य च ज्ञानस्य चाद्वितीयो निधिः।



---

१. तैत्तिरीयसंहिता, २।५।५।३२; २. ताण्ड्यब्रा., १८।२।१९।
३. शतपथब्रा., ९।५।१।१८; ४. तदेव, ३।४।२।८।
५. मैत्रायणीसंहिता, २।४।२; काठकसंहिता, १२।१२।
६. काठकसंहिता, १३।६; ७. ऐतरेयब्रा., ८।११।
८. तदेव, ७।२७; ९. शतपथब्रा., ५।१।१।१।

# गोशब्दस्य यास्कीयनिर्वचनम्

**डॉ. महेन्द्रपाण्डेयः**
प्राध्यापकः, वेदविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



गच्छतीति गौरित्यत्र पशुवाचको गोशब्दः[१], सर्वत्र हि सञ्चरणाय गच्छतीति। गीयते स्तूयते वा। कर्तरि गमेर्डोस्प्रत्यये कृते गौरिति शब्दनिष्पत्तिः, अथवा गातेर्धातोः ओकारो नामार्थप्रत्ययः। बाहुलकाद् डोस्प्रत्यये कर्तरि अधिकरणे वा भवतीति। गमनक्रियायां हि सर्वप्राणिनामस्तित्वम्। गमनक्रियाभावाद् मृत्युमेतीति उद्घोषयन्ति पूर्वाचार्याः। यतो हि शरीरे पञ्चतत्त्वादितत्त्वाभावात् सञ्चरणस्याभावः, तस्माद् गच्छतीति गोनामधेयो भवति। यथा—आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः[२]। तथा च अथर्ववेदे कथितमपि 'प्राणा अपाना इह ते रभन्ताम्'[३]। अतो यास्काचार्यो गमनक्रियामधिकृत्य प्रब्रवीति—'गौरिति पृथिव्या नामधेयमिति'। एवम् 'अथापि पशुनामेह भवति'[४]। यथा कारणमाह—यद् दूरङ्गता भवति। यच्चास्यां भूतानि गच्छन्ति। प्रथनादेव पृथिवी अर्थाद् अस्याः पृथिव्या अन्तो नोपलभ्यते। इयं दूरमध्वानं प्रति गता भवति। सर्वस्य जगतः पृथिवी एव आधारभूता, अतो गौरिति पदेन पृथिवी एव गृह्यते। अस्यां सर्वे जङ्गमादिप्राणिनो गच्छन्ति गायन्ति तिष्ठन्ति वेति। तथा च अमरकोषे—'गौः कुम्भिनी क्षमा'[५]। एवं रघुवंशमहाकाव्येऽपि— 'दुदोह गां स यज्ञाय'[६]। इति पृथिव्यर्थे गोशब्दस्य प्रयोगा एवं लभ्यन्ते। तथा च तद्धितप्रयोगेऽपि गौरित्यस्य प्रयोगो भवति। अर्थाद् अस्यामेव पशुगवि तद्धितप्रत्ययकृतेन विशेषेण गोभिः = पयोभिः, इत्यर्थो भवति। तथा च मन्त्रः—

१. निरु. २।२ एवं 'गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः' इति केशवः। तथा च 'जुगोप गोरूपधरामिवोर्वीम्' रघुवंशे - २।३।

२. शुक्लयजुर्वेदे - ३।६;

३. अथर्व. ८।१।१।

४. निरु. २।२;

५. अम. २।१।४।

६. रघु. १।६।

'आ धावता सुहस्त्यः शुक्रा गृभ्णीत मन्थिना। गोभिः श्रृणीत मत्सरम्'[१]। अर्थाद् हे सुहस्त्यः = शोभनहस्ता ऋत्विजः, एभिर्ग्राविभिः संस्कृत एष सोम इति यूयम्, आधावता = अधावत् सपद्यागच्छत। गृभ्णीत = गृह्णीत, एतौ शुक्रा = शुक्रौ, मन्थिना = मन्थिनौ ग्रहौ। किञ्च गोभिः = गोविकारैः पयोभिरित्यर्थः, मत्सरम् = मदयितारं सोमम्, श्रीणीत = संस्फुरुत। अत्र मत्सरः सोमो मन्दते तृप्तिकर्मणः। इत्यत्र गोभिः श्रपणस्य गव्येन पयसेत्यर्थो गम्यते। विकारार्थे गोशब्दाज्जातस्य यत्प्रत्ययस्य लुक्।

अपि च गोरित्यधिषवणचर्मणो नाम भवति। अत्रापि गौः कृत्स्नवदभिधायकः। अर्थाद् गोरवयवभूतस्य चर्मण इति। यथा निगमः—

'ते सोमादौ हरी इन्द्रस्य निंसतेंशु दुहन्तो अध्यासते गवि।

'तेभिदुग्धं पपिवान्सोम्यं मध्विवेन्द्रो वर्धते प्रथते वृषायते'[१]।

निगमेऽस्मिन् सप्तम्यर्थे एतदवयवभूतस्य चर्मणो नाम। 'चर्म चरतेर्वा उच्चृतं भवतीति वा'[२]। अर्थात् चरतीति चर्म। सर्वस्मिन् शरीरे गतं संलग्नं भवति अथवा शरीरात् चर्मते पृथक् क्रियते। चर्म अत्र सोमाभिषवार्थे चर्मनिमित्तपात्रविशेषः।

मन्त्रार्थः—ते = एते ग्रावाणः, सोमादः = सोमभक्षयितारः इन्द्रस्य, हरी = अश्वौ, निसन्ते = चुम्बन्ति। अंशु = सोमासमभिषूय, दुहन्तः = प्रपूरयन्तः, ग्रहम्, अध्यासते = अधितिष्ठन्ति। स इन्द्रः, तेभिः = तैः दुग्धं सोम्यम् = सोममयम्। मधु = अमृतं पपिवान् = पीतवान् वर्धते वीर्येण, प्रथते = विस्तीर्णशरीरश्च भवति। 'पृथु विस्तारे'। ततश्च वृषायते = वृषे वा चरति। वर्षं प्रवर्तयतीत्यर्थः। गवि इत्यत्र चर्मणो नाम गोरवयवभूतस्य कृत्स्नवदभिधायकः।

एवमेव अन्यत्रापि गोशब्दोऽनेकार्थः प्रतिभाति, तद्यथा—'अथापि चर्म च श्लेष्मा च'[३] गृह्यते।

अत्र गवावयवे चर्मणि अस्य गोशब्दस्य विकारे श्लेष्मणि व्यवहारः। यथा—'वनस्पते विड्वङ्गो हि भूया अस्मसखा प्रतरणः सुवीरः। गोभिः सनद्धो असि वीडयस्व स्था ता ते जयतु जे त्वानि'[४]। इति रथास्य स्तुतिः। अत्र गोभिः

---

१. ऋ.सं. ७।१।३;

२. तदेव-१०।९४।९।

३. निरु. २।२;

४. तत्रैव।

५. ऋ.सं.स. ४।७।३५-१।

इत्यस्यार्थो श्लेष्मा भवति। रथः चर्मणावनद्धो भवति। तस्यारादयः श्लेष्मणा संश्लेषिता भवन्ति। एवं गोशब्देन 'स्नाव श्लेष्मा च भवति। अत्र स्नावन्शब्दात् स्नायुवचनो निरुक्तकारेणोक्तः। यथा—'सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सनद्धा प्रतति प्रसूता। यत्रानरः सं च वि च द्रवन्ति, तत्रास्मभ्यमिषवः शर्म यंसन'[१]।

मन्त्रोऽयं इषु - स्नुतौ प्रयुक्तः। इषु हि स्नावना वेष्टिता श्लेष्मा च संश्लेषिता भवति। अतो वेष्टिता श्लेष्मा च संश्लेषिता भवति। अतो मन्त्रेऽस्मिन् गोभिरित्यस्यार्थो गोविकारैश्चर्मभिः, सन्नद्धः = समन्ततः, नद्धो बद्धो गव्येन चर्मणा श्लेष्मणा चेति। तथा च गोशब्देन ज्यापि भवति। अत्र 'ज्या' इत्यर्थे गव्या इति तद्धितप्रयोगः। तथा हि गमयतीषूनिति गव्या = ज्या। तथा च अमरकोषे ज्याशब्देन पृथिवी गृह्यते। अत्र गोशब्देन पृथ्वी तथा च ज्यापि भवति. एवं ज्यापदेनापि पृथ्वी गृह्यते। अतः साम्यात् सुसङ्गत्युक्तो भवति। यथा—श्रोणिर्ज्या काश्यपीधिति'[२]।

तथा च अन्यद्रव्यमपि गोपदेन ग्राह्यं भवति। यथा—'वृक्षे वृक्षे नियतामीमयद्गौस्ततो वयः प्रपतान्पुरुषादः'[३]।

प्रसङ्गादत्र वृक्षे वृक्षे = सर्वस्मिन् वृक्षमये धनुषि धनुषि नियता = निबद्धा, गौः = गव्या अर्थाद् गोसम्बन्धिनी स्नायुमती मौर्वी गव्या वा गमयित्री शराणामिति। अमीमयत् = मीमयति = शब्दं करोति। अत्र मीमयति शब्दकर्मा इति निरुक्तकाराः वदन्ति। तथा च गोमतीनदिविशेषे गोशब्दस्य प्रयोगो जलार्थमपि भवति। यतो हि गोमती जलविशिष्टः प्रसिद्धः नदी इति। यथा—'अश्ववती गोमतीविश्वसुविदो' एवं 'प्र देवि गोमतीरिषः'[४]। एवं 'आदित्योऽपि गौरुच्यते'[५]। आदित्यो हि गमनशीलो भवति। तथा च गमयति ह्यसौ रसानात्मानं प्रति। एवं गच्छत्यन्तरिक्षे च। तदुदये हि चन्द्रादीनां प्रभानाशो भवति। सर्वतो हि गता भवति। गमनेनैव सर्वतो आवृतो भवतीत्यर्थः। यथा—'उतादः परुषे गवि'[६]।

मन्त्रेऽस्मिन् गवि गच्छतीति गौरादित्यः। अत्र निमित्ते सप्तमी भवति। 'निमित्तात्कर्मयोगे'[७]। इत्यनेन अदः = अमुस्मिन् आदित्यमण्डले, परुषे = परुष्मति

---

१. ऋ.सं. ५।१।२१;
२. अम. २।१।२।
३. ऋ.सं. ७।७।१९;
४. तदेव-१।९।४८-१५।
५. निरु. २।२;
६. ऋ.सं. ६।५६।३।
७. पा. २।३।३६।

पर्ववति भास्वति इत्यौपमन्यवः कथयन्ति। अर्थाद् अहोरात्रादि पर्व तद्वति। गवि = गमनशीलः सूर्यः, नियतगमनवृत्तिना नित्यकालमीरयतीति। अत्र चन्द्रोऽपि गौरुच्यते'[१]।

आदित्यात् सुषुम्णो नाम एको रश्मिश्चन्द्रमसं प्रति गच्छति। सेयमस्य चन्द्रमसो दीप्तिर्भवतीति। यथा निगमः प्रमाणयति—'सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः'[२]।

अत्र सुषुम्णः = सुखयतीति सर्वाणि भूतानि नित्यमसौ। आदित्यान्निस्सृत्य रश्मिश्चन्द्रमसं प्रति गतः, अतोऽसौ चन्द्रमा गन्धर्व उच्यते। गन्धर्वः = गां धरतीति नैरुक्तवचनात्, अतः सुषुम्णो रश्मिरपि गौरुच्यते। अर्थाद् गोशब्दवाचकः सुषुम्णारश्मिर्वाच्या इत्यभिप्रायः। एवमत्र चैकदेशे कृत्स्नवन्निगमाच्चन्द्रमसोऽपि गोशब्दवाच्यतेति मन्त्रस्यार्थः।

तथा च नैरुक्ते 'सोऽपि गौरुच्यते'[३]। अर्थात् सुषुम्णो रश्मिरपि गौरुच्यत इत्यभिप्रायः, यथा—'अत्राहं गोरमन्वतेति'[४]। अर्थाद् अत्र गोः = सुषुम्णस्यैकस्य सूर्यरश्मिश्चन्द्रमण्डलेऽन्तःप्रविश्य सूर्यकिरणाः प्रतिफलन्ति। अर्थात् सूर्य इव चन्द्रेऽपि प्रविश्य सर्वं प्रकाशयति। यथा जलमध्ये सूर्यकिरणाः प्रतिफलन्ति।

'सर्वेऽपि रश्मयो गाव उच्यन्ते'[५]। अत्र गाव इति गोशब्दस्य प्रथमाबहुवचने प्रयोगः। गाव इति बहुवचनान्तपदस्य रश्मिरूपेणानुवादेन वैशिष्ट्यं द्योत्यते। रश्मयः तमांसि दूरयति, गच्छन्ति सर्वतस्तमो विहन्तुम्, सर्वतो हि परिगता भवन्ति, व्याप्नुवन्ति जगदित्यर्थः। यथा—

'तां वां वास्तन्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः।
अत्राह तदुरुगायस्य वृष्णः परं पदमवभाति भूरि'[६]।।

अत्र दम्पती अभिप्रेत्य द्विवचनं वां युवाभ्यामित्यर्थः। वस्तूनि = सुख-निवासयोग्यानि स्थानानि, उश्मसि = कामयामहे, यत्र = येषु स्थानेषु, गावः = रश्मयः, भूरिशृङ्गाः =बहुदीप्तयः, अयासः = सञ्चरणशीलः। अत्राह = येषु

---

१. निरु. २।२;
२. य.सं. १८।४०।
३. निरु. २।२;
४. ऋ.सं. १।६।७।
५. निरु. २।२;
६. ऋ.सं. १।१५४।६।

स्थानेषु, उरुगायस्य = उरुगमनस्य, भगवतो वृष्ण: = विष्णो: परमं पदम् तादृशं तत् पदम्, अर्थाद् आदित्यस्य परमं पदं मस्थानं भूरि = अतिप्रभूतम्, अवभाति = दीप्यते। तथा च 'गोशब्द आदित्यवाचको भवति'[१]।

यतो हि गमयति हि रसानात्मानं प्रति, उपक्षयं वा गमयति, गच्छत्यन्तरिक्षे। स हि गतिक्रियया उदयाचलमस्ताचलं च प्रतिगच्छति। यथा— 'सूर्यस्येव रश्मयो द्रावयित्नवो'[२]। तथा च द्यौरपि गौरुच्यते[३]।

यतो द्यौ: पृथिव्या उपरि गता भवति। तथा च दिवि ग्रहनक्षत्रतारकादीनि गच्छन्ति तस्माद् गौ:। अधिकरणेऽत्र गमेर्डो इति। तथा च सायणेनाप्युक्तम्— 'गौर्मगमनशील इति'। यथा—'आयङ्गौ: पृश्निरक्रमीत्'[४]। अत्र गच्छतीति गौ: इति महीधराचार्य:। एवं गमनशील: पृश्नि: = प्राप्तवर्ण: प्राप्ततेजा अयं सूर्य: (स्वर्गे सञ्चरन् पितरं च द्युलोकमपि) आक्रमीत् = आक्रान्तवान् प्राप्तवानिति भाव:।

तथा च गोपदवाच्य: उस्त्रिया इति। उस्त्राविणोऽस्यां भोगा: उस्त्रेति च[५]।

यतो हि अस्यां = गवि क्षीरादय: ऊर्ध्वं स्त्रवन्ति गच्छन्ति। एवमेव उस्त्रा इति गोनाम भवति। क्षीरदधिनवनीतक्रमेणेति सेयमुस्त्रा। उस्त्रैव उस्त्रिया स्वार्थे 'घ:' पृषोदरादित्वात्। यथा निगम: = 'वीतं पातं पयस उस्त्रियाया:'[६]। अर्थाद् हे मित्रावरुणौ, उस्त्रियाया: = गो:, पयस: =गोदुग्धेन निष्पन्नस्य, वीतम् = अश्नीतम्, पातम् = पिबतञ्च इत्यर्थ:। अपि च गौरिति माध्यमिकाया वाच:[७]। मेघो व्रजत्यन्तरिक्षे गर्जतीति च। अन्तरिक्षे मेघ: प्रजाहितमभिलक्ष्य वर्षणाचिह्नरूपं गर्जनशब्दं करोतीत्यर्थ:। अतो वाग् एव गोशब्दाभिधेया मध्यस्थानीया देवता। यथा मन्त्र:—अलातणो बल: इन्द्रव्रजो गो:'[८]। अत्र गो इति माध्यमिकायां वाच:। तथा च सायण:—गौर्धेनु: वत्समनुप्राप्य हिङ्कारशब्दं करोति। अतो वागिति गो: नाम।

तथा च निगम:—गौरमीमेदनुवत्सं मिषन्तं मूर्धानं हिङ्कृणोन्मातवाउ'[९]।

अत्रापि गौ: माध्यमिका वागुच्यते। एवं रघुवंशकाव्येऽपि वागेव[१०]। तथा च अघ्न्या अपि गौ: भवति। यतो हि गाव एव प्रकृष्टधनमिति। अत: सा अहन्तव्या

---

१. निरु. २।४;
२. ऋ.सं. १।४।७।३।
३. निरु. २।४;
४. य.सं. ३।६।
५. निरु. ४।३;
६. ऋ.सं. १।५३।४।
७. निरु. ६।१;
८. ऋ.सं. ३।३०।१०।
९. ऋ.सं. १।१६४।२८;
१०. 'रघोरुदारामपि गां निशम्य' (५।१२)

भवति। अथवा अघं पापं हन्तीति दानेन। यदि वाग् गौरुभयथापि अघ्न्या = अहन्तव्या भवति। तथा चोभयार्थे निगमः—'अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती'[४]।

एवं 'अघ्न्येयं सा वर्धतां महते सौभगाय'[५]। तथा च 'गौः तनूरुच्यते'[६]।

यतो हि अस्यां गवि क्षीरदध्यादयो भोगा विस्तृता भवन्ति। अत्र 'तनू विस्तारे' अधिकरणे ऊः प्रत्ययः। यथा—गोः पयो जायते, अतो गोः पुत्रः पयः पयसश्च आज्यं जायते, अत एव अनन्तराया आगमनत्वाद् गौरित्यनेन तनूरुच्यते'। यथा निगमः—

'तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन् स्वदया सुजिह्व'[७]।

अस्मिन् मन्त्रे तनूनपादिति काथक्यमतानुसारेण आज्यं भवति। अग्निरिति शाकपूणिः, यतो हि अद्भ्यः ओषधयो वनस्पतयश्च जायन्ते।

एतावता गमनशीलक्रियाधारमभिलक्ष्य पृथिव्याद्यनेकार्थेषु गोपदप्रयोगो यास्केन निरुक्तशास्त्रे भूरिशः कृतः। तथा च वैज्ञानिकं रहस्यमपि गोपदप्रयोगविषय उद्घाटितम्। तथा चार्थदृष्ट्या गोपदानुशीलस्य अनेके पक्षा अपि प्रस्तुताः। यतो हि अर्थो हि प्रधानस्तद्गुणशब्दः। वेदशब्दार्थनिबन्धनपरिज्ञानं निरुक्तादेव भवतीति तत् कृतिर्यास्कस्यैव। निरुक्तमाधुनिकभाषाविज्ञानस्य मेरुदण्डमस्ति। निरुक्तग्रन्थे यास्को वैज्ञानिकमतस्योदाहरणं युक्तिपूर्वकं कृतवान्। कस्यापि वस्तुनः क्रियानुसारेण नामकरणेनानेकानां वस्तूनामेकक्रियात्वेनानेकानामेकनाम भवितुं शक्नोति। कस्यापि शब्दस्य स्वभाव एक एवास्ति यत् कयापि क्रियया कस्याप्येकस्यैव वस्तुनो बोधो भवति। वस्तुना सह बहुक्रियाणां योगेऽपि एकैव क्रियानुसारेण तस्य नाम भवत्यथात्र गौरित्यस्य क्रियया वैशिष्ट्येन नामकरणमभूत्।



---

१. ऋ.सं. १।१६४।४०; २. ऋ.सं. १।१६४।२७।
३. निरु. ८।२; ४. ऋ.सं. १०।११०।२।

# आत्मनि प्रमाणम्

**(न्यायवैशेषिकदर्शनानुसारेण)**

**डॉ. सर्वेश्वरराजहंसः**

उपाचार्यः, न्यायवैशेषिकविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी



बहुभिर्विपश्चिद्भिः प्रत्यक्षोपलब्धियोग्यताविरहाद् आत्मनोऽप्रत्यक्षतया तस्य सिद्ध्यर्थमनुमानप्रमाणं शब्दप्रमाणञ्चोपस्थाप्यते। यथोक्तं प्रशस्तपादभाष्ये—"तस्य सौक्ष्म्यादप्रत्यक्षत्वे सति करणैः शब्दाद्युपलब्ध्यनुमितैः श्रोत्रादिभिः समधिगमः क्रियते"[१]।

अयमाशयः—आत्मनः सौक्ष्म्यं प्रत्यक्षोपलब्धियोग्यताविरहः, स चाऽहं सुखी, अहं दुःखी इत्यादिप्रत्ययस्य देहादिभिन्नविशेष्यकत्वसाधकप्रत्यक्षराहित्यम्, तस्यानुमानैकवेद्यत्वात्। अनुमानं चाऽहं सुखीत्यादिज्ञानं देहादिभिन्नविशेष्यकं देहाद्यवृत्तिसुखादिप्रकारकप्रमात्वात्। न च सुखादौ देहाद्यवृत्तित्वमप्रामाणिकमिति वाच्यम्, सुखादयो देहाद्यवृत्तयोऽभावद्रव्यभाविविशेषगुणत्वात्। तदीयविशेषगुणानां रूपादीनां यावद् द्रव्यभावित्वाद् इत्यनुमानस्य तत्र प्रमाणत्वात्।

श्रोत्रादिभिरात्मसमधिगमप्रकारस्तावदित्थम्—तथा हि शब्दादीनामुपलब्धयोऽनुव्यवसायात्मकमानसप्रत्यक्षसाक्षिकतयाऽपलपितुमनर्हाः। क्रियायाः सकरणत्वनियमेन शब्दाद्युपलब्ध्यात्मक्रियाकरणतया श्रोत्रादयोऽनुमेयाः।

अनुमानप्रयोगस्तावदित्थम्—शब्दादीनामुपलब्धयः सकरणिकाः, क्रियात्वात्, वास्यादिकरणकच्छिदिक्रियावत्। तदनन्तरं श्रोत्रादीनामधिष्ठातृत्वेनात्मा अनुमेयः। अनुमानप्रयोग इत्थम्—श्रोत्रादीनि कर्त्तृप्रयोज्यानि अचेतनत्वात् करणत्वाद् वा, बार्धकिप्रयोज्यकुठारादिवत्। तदेवमात्मा श्रोत्रादीनामधिष्ठातृतया अनुमानसाक्षिकत्वेन नूनमभ्युपेयः। अप्रत्यक्षत्वेऽप्यनुमानसिद्धतयाऽऽत्मनः स्वीकारो दुर्निवारः।

---

१. प्रशस्तपादभाष्यम् (आत्मनिरूपणम्)।

श्रोत्राद्यधिष्ठातृत्वं श्रोत्रादिनिष्ठमनस्संयोगानुकूलप्रयत्नाश्रयत्वम्। श्रोत्रादिषु कर्त्तृप्रयोज्यत्वञ्च कर्त्तृगतप्रयत्नप्रयोज्यमनस्संयोगाश्रयत्वम्। यदा आत्मनः श्रोतुं द्रष्टुं वा इच्छा भवति, तदा स स्वप्रयत्नेन स्वमनसि क्रियां जनयित्वा तत् श्रोत्रादिना संयुनक्ति, मनसा संयुक्तं श्रोत्रादिकं शब्दाद्युपलब्धिं जनयति। तत्तदिन्द्रियजन्योपलब्धिं प्रति तत्तदिन्द्रियमनःसंयोगस्य कारणतया तदावश्यकत्वात्।

न्यायसूत्रभाष्यकारेण महर्षिवात्स्यायनेन आत्मनोऽप्रत्यक्षत्वविषये प्रतिपादितं यत्—"आत्मा तावत् प्रत्यक्षतो न गृह्यते। स किमाप्तोपदेशमात्रादेव प्रतिपद्यत इति? नेत्युच्यते, अनुमानाच्च प्रतिपत्तव्य इति। अत एव सूत्रकारेण महर्षिगौतमेन इच्छादिगुणानामात्मनो लिङ्गत्वमुक्तम्। यथा "इच्छाद्वेषप्रयत्नधर्माधर्मसुख-दुःखज्ञानान्यात्मनो लिङ्गम्"[१]। एतदभिप्रायमनुसरन्नेव भाष्यकारेण इत्थं प्रत्यपादि "यज्जातीयार्थस्य सन्निकर्षात् सुखमात्मोपलब्धवान्, तज्जातीयमेवार्थं पश्यन्नुपादातुमिच्छति, सेयमुपादातुमिच्छा एकस्यानेकदर्शिनो दर्शनप्रतिसन्धाना भवन्ती लिङ्गमात्मनः। नियतविषये हि बुद्धिभेदमात्रे न सम्भवति देहान्तरवदिति"[२]।

अयं भावः—इदं दृश्यते यन्मनुष्यः इन्द्रियसन्निकृष्टाद् यज्जातीयाद् वस्तुनः सुखं लभते। कालान्तरे यदि तज्जातीयेनान्यवस्तुना तस्येन्द्रियसन्निकर्षो जायते, तदा तस्य एतज्जातीयं वस्तु सुखजनकमिति स्मरणं भवति। सन्निकृष्टञ्च वस्तु सुखजनकजातीयतयाऽवधारितमुपादातुं चेष्टते। एषा स्थितिस्तदैव सम्भवति यदि पूर्वकाले तज्जातीयवस्तुनि सुखजनकत्वस्यानुभविता उत्तरकाले च तज्जातीये वस्तुनि सुखजनकत्वस्य स्मर्ता एको भवेत्। उभयोरन्यत्वे नैषा स्थितिरुपपद्यते, स्मरणानुभवयोः सामानाधिकरण्यनियमात्। यो यदनुभवति स एव कालान्तरे तदनुभवजन्यसंस्कारस्योद्बोधे सति तत् स्मरति, नान्यः।

सुस्पष्टमिदं लोके यत्—चैत्रेणानुभूतं स्वाननुभूतं वस्तु मैत्रो न स्मरतीति। तथा चैकेन देहेनानुभूतस्य स्मरणं न भवति, तथैव यदि देह एव ज्ञानाश्रयो भवेत्, तदा बालवृद्धशरीरयोर्भेदेन बाल्येऽनुभूतस्य स्मरणं वार्द्धक्ये न स्यात्। अनुभवितुः बालदेहस्य वृद्धावस्थायामसत्त्वात्। तथा च पूर्वं सुखजनकतया यज्जातीयं वस्तु अनुभूतम्, उत्तरकाले तज्जातीयस्य वस्तुनो दर्शने सत्यपि न स्मर्येत।

---

१. न्यायसूत्रम् (अ. १ आ. १ सू. १०)।

२. वात्स्यायनभाष्यम् (आत्मनिरूपणम्)।

पूर्वकालिकस्यानुभवितुरुत्तरकालेऽसत्त्वात्। तथा च सुखजनकतयाऽ-नुभूतवस्तुसजातीयं वस्त्वन्तरमुपादातुं तद्दर्शिन इच्छाया असम्भवेन तदुपादानाय चेष्टा न स्यात्। चेष्टां प्रति इच्छायाः, इच्छां प्रति च सुखादीष्टसाधनताज्ञानस्य कारणत्वात्। तदेवमुक्तरीत्या जायमाना इच्छा पूर्वोत्तरकालिकयोर्देहयोर्भेदेन देहेऽघटमाना स्वाश्रयस्य पूर्वोत्तरकालयोरभिन्नतां व्यवस्थापयति।

अतो विस्पष्टमिदं यद् बौद्धाभिमता क्षणिकविज्ञानात्मिका बुद्धिः, चार्वाकानुगामिभिः आत्मस्थानीयतया मन्यमानो देहो वा आत्मा इच्छाश्रयो न भवितुमर्हति। इच्छाया अतिरिक्तात्मानुमानप्रकारश्चेत्थम्—इच्छा क्वचिदाश्रिता गुणत्वात्, रूपादिवत्। उक्तरीत्या तत्र देहाद्याश्रितत्वबाधेन तत्सहकृतं गुणत्वलिङ्गकं क्वचिदाश्रितत्वसाधकानुमानमेव इच्छायां देहादिभिन्नाश्रितत्वं साधयति। देहादिभिन्नतया इच्छाश्रयत्वेन सिध्यद् द्रव्यमेवात्मा।

महर्षिकणादेन वैशेषिकसूत्रे इन्द्रियार्थप्रसिद्धौ आत्मनो लिङ्गत्वं प्रतिपादितम्। तद्यथा—"इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः"[1] इति। अत्र हेतुशब्देन ज्ञापको हेतुः लिङ्गरूपो विवक्षितः, न तु कारको हेतुः। आत्मनो नित्यत्वे तत्र कारकस्य हेतोरपेक्षणात्। इन्द्रियार्थप्रसिद्धिशब्देन इन्द्रियैः जायमाना अर्थस्य प्रत्यक्षात्मिका उपलब्धयो विवक्षिताः। ताश्च चाक्षुष-स्पार्शन-घ्राणज-रासन-श्रावण-मानसप्रत्यक्षरूपाः। चाक्षुषप्रत्यक्षं रूपादीनाम्। श्रावणं शब्दादीनाम्। मानसं सुखादीनाम्। रासनं रसादीनाम्। स्पार्शनं स्पर्शादीनाम्। इमानि प्रत्यक्षज्ञानानि प्रत्यक्षसिद्धतया भवन्ति। लिङ्गानि इन्द्रियेभ्यः अर्थेभ्यश्च भिन्नस्य आत्मनोऽस्तित्वसाधने। रूपाद्युपलब्धिभिः सम्पाद्यमान आत्मानु-मानप्रकारस्तावदित्थम्—

"रूपाद्युपलब्धिः द्रव्याश्रिता गुणत्वाद् रूपवत्। एतादृशानुमानप्रयोगेण उपन्यस्यमानं गुणत्वहेतुकद्रव्याश्रितत्वसाध्यकतादृशोपलब्धिपक्षकमनुमानं पृथिव्याद्याश्रितत्वबाधसहकारेण पृथिव्यादिभिन्न आत्मसंज्ञकनवमद्रव्याश्रितत्वसिद्धौ पर्यवस्यति। पृथिव्याश्रितत्वाभावश्च तादृशोपलब्धौ नासिद्धः। उपलब्धिः पृथिव्यादिषु अनाश्रिता अयावद्द्रव्यभाविविशेषगुणत्वात्। पृथिव्यादीनां विशेषगुणा यावद्द्रव्यभाविनः, ते हि स्वाश्रयद्रव्यस्थितिं यावत्तिष्ठन्ति। न ते स्वाश्रये द्रव्ये जीवति विनश्यन्ति। न च पृथिव्यां रूपादीनां पाकजतया तेषां यावद्

---

१. वैशेषिकसूत्रम् (अ. ३ आ. १ सूत्रम् २)।

द्रव्यभावित्वमसिद्धमिति वाच्यम्। स्वाश्रयनाशजन्यनाशप्रतियोगिविशेषगुणसमवेत-गुणत्वव्याप्यजातिमत्त्वस्य यावद्द्रव्यभाविविशेषगुणतयाऽभिमतत्वात्। ये गन्धादयः स्वाश्रयनाशादेव नश्यन्ति, तत्र समवेतो गुणत्वव्याप्याः गन्धत्वादिजातयः सर्वेषु गन्धादिषु सन्तीति सर्वे गन्धादयो यावद्द्रव्यभाविनो भवन्ति। आत्मनो विशेषगुणेषु न कोऽपि स्वाश्रयनाशजन्यनाशप्रतियोगी, अत आत्मन आकाशस्य च विशेषगुणा न यावद्द्रव्यभाविनः। तथा च पृथिव्यादीनां यावद्द्रव्यभाविविशेषगुणेभ्यो विजातीयतया सुखादयो भवन्ति पृथिव्या अनाश्रिताः।

इन्द्रियार्थप्रसिद्धिशब्देन न केवलं प्रसिद्धेरेवात्मलिङ्गत्वं विवक्षितम्। किन्तु इन्द्रियाणामर्थानाञ्चाप्यात्मलिङ्गत्वमभीप्सितम्। तथा हि—''इन्द्रियाणि कर्त्तृप्रयोज्यानि करणत्वाद् बार्धकिप्रयोज्यकुठारादिवद्'' इत्यनुमानेन चक्षुरादीन्द्रियप्रयोजक-कर्त्तृतयाऽप्यात्मा सिद्ध्यति। अर्थेभ्योऽप्यात्मा सिद्ध्यति। यथा—रूपादयः कस्यचिद् भोग्याः, जन्यत्वात्। यो न भोग्यः, स न जन्यः, व्योमवत्। भोगश्च सुख- दुःखान्यतरविषयकः साक्षात्कारः। भोग्यत्वञ्च प्रकृते भोगविषयोत्पादकत्वम्। रूपादयो हि इन्द्रियेण सन्निकृष्टाः सन्तः स्वानुभवेन भोगविषयं सुखदुःखं वा जनयन्तीति भवन्ति भोग्याः। यस्य चैते भोग्याः, स पृथिव्यादिभ्यो भिन्न आत्मैव, तेषां जडतया भोक्तृत्वासम्भवात्।

न चोक्तेष्वनुमानेषु प्रसिद्धिः, इन्द्रियाणि, अर्थाश्च पक्षभावेनैव तदुपयोगिन इति तेषां सूत्रोक्तं हेतुत्वमनुपपन्नमिति वाच्यम्, हेतुशब्देनानुमिति-कारणीभूतसाध्यव्याप्यहेतुप्रकारकनिश्चयविशेष्यस्य विवक्षितत्वात्। यथोक्तं शङ्कर-मिश्रेणोक्तसूत्रस्य स्वकीयायामुपस्काराख्यव्याख्यायाम्—''हेतुपदमत्रानुमितिजनक-परामर्शविशेष्यपरमिति न किञ्चिदनुपपन्नम्। तथा हि अनुमितिजनकः साध्यव्याप्यहेतुप्रकारकनिश्चयः ''पक्षः साध्यव्याप्यहेतुमान्'' इत्याकारकः। तदीयविशेष्यतायाः पक्षवृत्तित्वेन सूपपद्यते पक्षभावेनानुमितावुपयुज्यमानस्य पक्षस्योक्तं हेतुत्वम्। उक्तरीत्या इन्द्रियाणामर्थानाञ्च आत्मनोऽनुमापकत्वस्य सम्भवेनोक्तसूत्रोत्तरसूत्रस्य चन्द्रकान्तीये भाष्ये—''इन्द्रियेणार्थेन च न खल्वात्माऽपदेष्टुं शक्यः'' इत्येवमुपलभ्यमानं वचनं न युज्यत इत्यवधेयम्।

न चेन्द्रियार्थप्रसिद्धेः इन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुत्वोक्तिर्न सङ्गता। तस्या इन्द्रियार्थहेतुकतया तदाश्रितत्वस्यैव न्याय्यत्वाद् इति वाच्यम्। प्रसिद्धौ करणविधया इन्द्रियस्य विषयविधयाऽर्थस्य च जनकत्वेऽपि तयोस्तस्या आश्रयत्वे मानाभावात्। भवेद् यदि यद् यस्य कार्यं तत् तदाश्रितमिति नियमः सम्भवेदपि तदा तद्बलेन

प्रसिद्धेः इन्द्रियार्थकार्यतया तदाश्रितत्वम्। परं स एव नास्ति। देहकार्ये देहानाश्रिते घटादौ तत्कार्यत्वस्य तदाश्रितत्वव्यभिचारित्वात्।

ननु तथापि प्रत्यक्षसिद्धौ देह एवास्तु इन्द्रियार्थप्रसिद्धेराश्रयः, किं तदतिरिक्तस्याऽऽत्मनः कल्पनयेति चेन्न, प्रसिद्धेः ज्ञानापरपर्यायाया विशेषगुणतया देहे उत्पत्त्यसम्भवात्। अयं भावः—देहस्य रूपादयो विशेषगुणास्तत्र अवयवगतेभ्यः सजातीयगुणेभ्यो जायन्ते। अतो ज्ञानं तत्र तदेवोत्पत्तुमर्हति, यदि देहावयवेषु करचरणादिष्वपि तत्स्यात्। न च तत्तेषूपलभ्यते। किञ्च तेष्वपि तदुत्पत्तये परम्परया तदारम्भकेषु परमाणुष्वपि रूपादेरिव तस्य सत्त्वमापद्येत। परमाणुषु च ज्ञानस्वीकारे तेभ्यः कदाचिदुत्पद्यमानेषु घटादिष्वपि तदुत्पत्तिर्दुर्वारतां व्रजेत।

किञ्च यदि देहावयवाः करचरणादयोऽपि ज्ञानवन्तः स्युः, तदा एकस्य देहस्यानेकचेतनवत्तया तेषां चैकमत्यासम्भवेन तैरेककाले मतभेदेन विभिन्नासु दिक्षु देहस्याकर्षणसम्भवेन देहस्याकालमेवोन्मथनमापद्येत। देहावयवानां ज्ञानवत्त्वे च हस्तानुभूतस्य हस्तनाशे स्मरणं नोपपद्येत, ''नान्यदृष्टं स्मरत्यन्यः'' इति नियमात्। देहनाशे देहकृतकर्मणां नैष्फल्यमपि दुर्वारम्। देहस्य सर्वथा नूतनतया तेन पूर्व-कर्मणामकृततया भोग्यानुपपत्तिरपि दुष्परिहरा। तदेवं देहस्य ज्ञानवत्त्वे कृतहानमकृताभ्यागमश्च परिहर्त्तुं नैव शक्येते।

ज्ञानं न देहस्य विशेषगुणः, अपाकजत्वे सति अकारणगुणपूर्वकत्वात् शब्दवद् इत्यनुमानेन ज्ञानस्य देहविशेषगुणत्वसिद्धेर्बाधोऽपि दुर्निवारः। न च तर्हि ज्ञानं देहस्य सामान्यगुण एवास्तु, देहसामान्यगुणस्य पाकजन्यतायाः कारणगुणपूर्वकतायाश्चानियमेन ज्ञानस्य तत्सामान्यगुणत्वसिद्धौ बाधकाभावादिति वाच्यम्, तस्य देहमात्रगतत्वेन एकत्वैकपृथक्त्वपरिमाणवद् अवयवगुणपूर्वकत्वस्य परत्वापरत्वयोरिव सावधित्वस्य द्रवत्वस्येव नैमित्तिकत्वस्य वेगस्येव कर्मजन्यत्वस्य चापत्तेः।

वैशेषिकदर्शने तृतीयाध्याये द्वितीयाह्निके चतुर्थसूत्रेण इन्द्रियार्थप्रसिद्धिभिन्नान्यपि कतिपयान्यात्मनो लिङ्गानि निर्दिष्टानि। यथा— ''प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियविकाराः सुखदुःखेच्छाद्वेषप्रयत्नश्चात्मनो लिङ्गानि'' इति। प्राणो नाम शरीराभ्यन्तरे ऊर्ध्वसञ्चरणशीलो वायुः। अपानश्च अधःसञ्चरणशीलो वायुः, स चैक एवोर्ध्वाधोगमनलक्षणकार्यवशात् प्राणापानेति नामभ्यां व्यपदिश्यते। वायुश्च स्वभावतः तिर्य्यग्गमनशीलः। अतः स्वाभाविकं

तिर्य्यग्गमनमकृत्वा वायोः प्राणाख्याप्रयोजकमूर्ध्वगमनम्। अपानाख्याप्रयोजकमधोगमनं कस्यचित् प्रयत्नाज्जायत इति मुसलादीनामुत्क्षेपणावक्षेपणकर्मदृष्टान्तेन नूनमभ्युपेयम्। यस्य च प्रयत्नाद् देहान्तर्वर्तमानस्य वायोरुक्तमस्वाभाविकं गमनं जायते, स आत्मैव नान्यः।

न च विरुद्धयोर्दिशोः सक्रिययोर्जलप्रवाहयोस्तिर्यक्प्रवर्तमानयोरपि यथा ऊर्ध्वगतिः प्रयत्नं विनैव जायते, तथैव देहान्तरसञ्चारिवायोरपि भवितुमर्हतीति तस्य प्रयत्नजन्यत्वकल्पनमयौक्तिकमिति वाच्यम्, कथितजलप्रवाहयोरूर्ध्वगतिवद् देहान्तर्गतवायोर्गतिकल्पने तस्यापि केवलमूर्ध्वमेव अध एव वा गतिर्भवेत्, न तु कदाचिदूर्ध्वं कदाचिच्च अधः। एवम्भूतो गतिभेदो यत्नं विना नैवोपपद्यते। एतत्प्रयत्नसाधकमनुमानं चेत्थम्—

''प्राणापानयोरूर्ध्वाधोगती प्रयत्नजन्ये, अस्वाभाविकानियतगतित्वात्, मुसलगतोत्क्षेपणापक्षेपणगतिवत्''। या गतिर्न प्रयत्नजन्या सा नास्वाभाविकानियतगतिः, यथा वायोस्तिर्यग्गतिः, अग्नेरूर्ध्वज्वलनात्मिका गतिः। जलस्य निम्नदेशाभिमुखी गतिः, विरुद्धदिक्क्रिययोर्जलप्रवाहयोरूर्ध्वगतिर्वा।

न चोक्तगतिप्रयत्नयोर्वैयधिकरण्येनोक्तगत्योः प्रयत्नजन्यत्वस्य बाधेनोक्तमनुमानं दुर्घटम्। किं वा जन्यजनकभावानुरोधेन तयोः सामानाधिकरण्यस्यैव स्वीकर्त्तव्यतया तादृशप्रयत्नाश्रयतयाऽऽत्मनः सिद्धिरसम्भवेति वाच्यम्, प्रयत्नस्य ज्ञानेच्छाजन्यतया ज्ञानेच्छयोश्च भूतद्रव्यसमवेतत्वबाधेन ज्ञानेच्छाजन्यप्रयत्नस्य गतिसामानाधिकरण्यासम्भवात्। यच्च गत्योर्व्यधिकरणप्रयत्नेन जन्यताया दुर्घटत्वमुक्तं तस्य गतिं प्रति स्वाश्रयसंयोगेन प्रयत्नस्य हेतुत्वाभ्युपगमेन परिहारसम्भवात्।

न च तयोः प्रयत्नजन्यत्वे निद्रायां तयोरनुपपत्तिः, तदानीं ज्ञानेच्छयोरभावेन तदधीनस्य प्रयत्नस्याभावादिति वाच्यम्, निद्रायामपि ज्ञानेच्छानपेक्षस्य जीवनादृष्टमात्रसाध्यस्य जीवनयोनिनाम्नः प्रयत्नस्य सत्त्वेन तमादायैव निद्राकालीनप्राणापानगत्योः प्रयत्नजन्यत्वसम्भवात्।

उन्मेषनिमेषकर्मभ्यामपि प्रयत्नवानात्मा साधयितुं शक्यते। तथा हि— उन्मेषो नाम उन्मीलनं तच्च अक्षिपक्ष्मणोर्विभागजनककर्मरूपम्। एवं निमेषो नाम निमीलनं तद्धि अक्षिपक्ष्मणोः संयोगजनककर्मरूपम्। अनयोः कर्मणोरपि प्रयत्नजन्यत्वाभ्युपगम आवश्यकः। वेगं वेगवद्द्रव्याभिघातं चान्तरेण जायमानत्वाद् विभिन्नफलकतया अस्वाभाविकत्वाच्च। उन्मेषेच्छया जनितस्य प्रयत्नस्याश्रयतां

भजत आत्मन: संयोगेनोन्मेषस्य निमेषेच्छाजनितप्रयत्नाश्रयीभूतात्मसंयोगेन निमेषस्य च प्रयत्नसाध्यताया औचित्यस्याऽक्षुण्णत्वात्। अनुमानप्रयोगश्चेत्थम्—

''उन्मेषनिमेषनामके कर्मणी प्रयत्नजन्ये, वेगतदाश्रयद्रव्यसंयोगं विना जायमानत्वात्, देहावयवगतकर्मवत् काष्ठपुत्तलिकानर्त्तनवद् वा''। न च प्रयत्नजन्यत्वे तयोश्चेष्टात्वापत्तिः, हिताहितप्राप्तिपरिहारानुगुण्येन तयोश्चेष्टात्मकताया इष्टत्वात्। चेष्टावत्त्वे पक्ष्मणोर्देहाङ्गत्वापत्तिरपीष्टैव, तदभ्युपगमस्यापत्यानाधायकत्वात्। पक्ष्मच्छेदे खण्डशरीरोत्पत्तेः स्वीकार-सम्भवात्।

जीवनात्—जीवनकार्यादप्यात्मा सिद्ध्यति। तथा हि—जीवनकार्यं देहस्य वृद्धिः, देहावयवेषु भग्नेषु क्षतेषु च तेषां संरोहणम्। अनयोर्जीवनकार्यत्वं जीवत्येव देहे जायमानत्वेन निर्विवादम्। एवञ्च जीवनकार्यं देहाधिष्ठातृप्रयत्नादेवोपपद्यते नान्यथा। स्पष्टमेवैतद् यद् वृद्धिभग्नक्षतसंरोहणवद् भवति, तत् प्रयत्नवताऽधिष्ठितं भवति। यथा गृहं वृद्धिभग्नक्षतसंरोहणयोर्भाजनतया भवति। तदनुगुणयत्नशालिना स्व-स्वामिना अधिष्ठितम्। तथा च यथा गृहस्वामी गृहस्य लघुत्वे प्रयोजनानुसारेण तस्य वृद्धिं करोति, भग्ने क्षते च जाते तन्नवनिर्माणात्मकं संरोहणं निवर्तयति, तथैवेदमप्युपेयं यदस्ति कश्चिद् देहस्वामी यः स्वप्रयत्नेन आहारादिप्रबन्धं विधाय देहस्य वृद्धिं तदीयस्य कस्यचिदङ्गस्य भङ्गे क्षते वा जाते औषधाद्युपचारविधानेन तत्संरोहणं कुरुते। अनुमानप्रयोगश्चेत्थम्—''देहः, ज्ञानेच्छाप्रयत्नभाजा केनाप्यधिष्ठितः, वृद्धिभग्नक्षतसंरोहणवत्त्वात्, गृहपत्यधिष्ठितगृहवत्''।

जीवनकार्यादिव जीवनादपि आत्मा सिद्ध्यति। तथा हि—जीवनं नाम देहाभ्यन्तरभागे प्राणवायोः संयोगः। अयं नूनं चेतनसंयोगप्रयोज्यो मन्तव्यः, अन्यथा पाषाणादावपि प्रसज्येत। यत्र चेतनस्य विजातीयः संयोगस्तत्र प्राणवायुसंयोग इत्येष नियमोऽवश्यमभ्युपेयः। अत एव तादृशचेतनसंयोगशून्ये पाषाणादौ न प्राणसंयोगः। न च प्राण एव चेतनः, स एव येन संयुक्तो बुभूषति तेन संयुज्यते, नातः प्राणसंयोगेन देहे प्राणभिन्नचेतनस्य संयोगः साधयितुं शक्यः। सति चैवं कथं जीवनस्यात्मसाधकतेति शङ्क्यम्। प्राणस्य वायुरूपतया बहिर्द्रव्यत्वेन तत्र मनोरूपान्तरिन्द्रियवेद्यचैतन्यस्य कल्पयितुमशक्यत्वात्। किञ्च प्राणो यद्यनित्यस्तदा तस्य चेतनत्वाभ्युपगमे चैतन्यजन्यपापपुण्ययोरपि तत्रैवाभ्युपेयतया प्राणनाशे तयोरपि नाशेन कृतहानाकृताभ्यागमापत्तिर्दुर्निवारा। यदि च नित्यस्तदा स आत्मशब्देन व्यपदिश्येत प्राणशब्देन वा, न तत्र विवादो

नित्यचेतनस्य सिषाधयिषितस्याङ्गीकारात्। जीवनस्यात्मसाधकत्वं चन्द्रकान्तेनात्मनः प्रस्तुतसूत्रभाष्ये स्पष्टमेव प्रण्यगादि। यथा—"[१]जीवनमाध्यात्मिकवायुसम्बन्धो नियतसहभावादात्मनो हेतुः। न खल्वन्यत्र शिलादौ तदुपलब्धिरिति"।

मनोगत्यापि आत्मा सिद्ध्यति। मनः खलु ज्ञानायौगपद्योपपत्तयेऽणुतया सिद्धम्। तत्तदिन्द्रियजन्यप्रत्यक्षसिद्धये च देहस्थैस्तत्तदिन्द्रियैस्तत्संयोगोऽपेक्षितः। स च तत्तत्स्थाने स्थिरैरिन्द्रियैर्मनसो गत्यैव सम्भवति। मनोगतिश्च मनसः प्रेरयितुः प्रयत्नवतः कस्यचित् सत्त्व एव घटते। तथा च यो मनः प्रेरयति, तत्र तत्तदिन्द्रियसंयोगानुकूलां गतिं जनयति, स आत्मैव नान्यः। न खलु मनसश्चैतन्यमुपेत्य तत्र तदिच्छया गतिमत्त्वं स्वीकर्त्तुं शक्यम्, मनसोऽणुतया ज्ञानादीनां तदाश्रितत्वोपगमेऽप्रत्यक्षत्वापत्तेः। धर्मप्रत्यक्षे धर्मिगतमहत्त्वस्य कारणत्वात्। इन्द्रियाणि एव चेतनानि, तान्येव यदा यमर्थमुपलब्धुं कामयन्ते, तदा तदर्थोपलब्धिं जनयन्ति। न तानि युगपद् विभिन्नान् अर्थान् अनुभवितुमभिलषन्ति। अतो न तेषां यौगपद्यमित्यपि न वक्तुं शक्यम्, तथा सति देहस्यानेकचेतनवत्तया तेषु युगपदेव विभिन्नासु दिक्षु गत्युन्मुखत्वे देहस्योन्मथनापत्तेः। चक्षुरादीनां नाशे तदनुभूतार्थस्य स्मरणानुपपत्तेश्चेति तेषां चैतन्यकल्पनायां विस्पष्टं दूषणग्रासः।

इन्द्रियान्तरविकारादपि आत्मा सिद्ध्यति। तथा हि—यस्याम्लद्रव्यस्य रसः कदाचिदनुभूतः, तादृशं द्रव्यं यदा कालान्तरे चक्षुषा दृश्यते, तदा तद्दर्शनमात्रादेव तदीयरसस्य स्मृत्या तदा स्वादेच्छा जायते। सा चेयमिन्द्रियाणां चैतन्ये नोपपद्यते। यत इन्द्रियचैतन्यपक्षे रसानुभवो रसनस्यैव न चक्षुषः। पूर्वानुभूतरसवतो द्रव्यस्य च दर्शनं चक्षुषो न रसनस्य, तथा च चक्षुर्जन्यपूर्वानुभूतरसवद्द्रव्यदर्शनात् कथं रसनस्य पुनस्तद्रसास्वादाभिलाषो भवेत्। अतो नूनमिदमभ्युपेयं यदस्ति कश्चिद् देहेऽन्यश्चेतनो यस्तत्तदिन्द्रियैर्विषयमनुभवति। तस्यैवोपकरणभूतानि सर्वाणि इन्द्रियाणि। अतः स रसनया रसमनुभवति। तदनुभवजन्यं संस्कारं स्वस्मिन् दधाति। स एव पूर्वानुभूतरसवद्द्रव्यं चक्षुषा दृष्ट्वा तादृशदर्शनोद्बुद्धसंस्काराद् रसं स्मरति, स्मृत्वा च तमास्वादयितुमिच्छति। तदिच्छया च तस्य दन्तेषूदकं सम्प्लवते। तदेवं चाक्षुषदर्शनप्रभवो रासनो विकारो विभिन्नेन्द्रियोपकरणवतोऽतिरिक्तस्यात्मनः साधक इति सुस्पष्टम्। सुखादयश्च गुणतया स्वाश्रयमनुमापयन्तोऽन्यत्र तदाश्रयत्वस्य बाधेन देहादिव्यतिरिक्तं स्वाश्रयं चेतनद्रव्यं साधयन्ति। अतस्तेषामपि सूत्रोक्त-मात्मलिङ्गत्वं निर्विवादम्।

---

१. चन्द्रकान्तीयभाष्यम् (आत्मनिरूपणम्)।

अस्मत्पदादपि आत्मा सिद्ध्यति। तथा हि अस्मत्पदमुच्चारणकर्त्तरि शक्तम्, योऽस्मत्पदमुच्चारयति, स एव तेनावबोध्यते। न हि 'अहं गच्छामि', 'अहं जानामि' इत्यादिवाक्यघटकेन देवदत्तोच्चरितेन इमाकारास्मत्पदेन यज्ञदत्तो बोध्यते। उच्चारणकर्तृत्वञ्च न देहे, न वा वाचि, देहस्य निष्प्राणत्वे उच्चारणाभावात्। यदि देह एव उच्चारयेद्, वागैव उच्चारयेत्तदापि देहवाचः सत्त्वेन उच्चारणं जायेत। अतो निश्चितमिदं यद् देहसम्बद्ध आत्मैव उच्चारणं करोति। अत उच्चारणकर्तृशक्तमस्मत्पदमात्मनि लिङ्गम्।

किञ्च अहमर्थपराद् आत्मपदादपि आत्मा सिद्ध्यति। तथा हि आत्मपदं साभिधेयं साधुपदत्वात्, गवादिपदवद् यश्चात्मपदाभिधेयः, स देहादिभ्यो भिन्न एव द्रव्यरूपः। न चाहमात्मानं जानामीति प्रत्यये अहमर्थस्य ज्ञानकर्त्तृतया आत्मशब्दार्थस्य च ज्ञानकर्मतया भानात्तयोर्भेदः स्वीकार्यः। ''चैत्रो घटं जानाति'' इत्यादौ भिन्ननिष्ठतया कर्मकर्त्तृभावस्य सिद्धत्वेनैकव्यक्तौ तदयोगात्। तथा च अस्मदात्मपदाभ्यामुभाभ्यामात्मनः प्रतिपत्तिर्भवतीति कथनमसङ्गतमिति चेन्न, ज्ञानाश्रयतया ज्ञानकर्त्तृत्वस्य ज्ञानविषयतया च ज्ञानकर्मत्वस्यैकत्रापि स्वीकारे बाधकाभावात्। यत्र हि क्रियायाः कर्त्तृत्वं कर्मत्वं चैकत्र बाधितं तत्रैव क्रियायाः कर्त्तृकर्मभावस्य भिन्नाश्रितत्वनियमात्।

'ननु देवदत्तो गच्छति' इति प्रतीत्यनुरोधेन देवदत्तादिपदस्य शरीरपरत्वमेव मन्तव्यं नात्मपरत्वं तत्र गतेरभावात्। भवति च प्रतीतिर्देवदत्तोऽहमित्याकारिका, अतोऽहमर्थस्य शरीररूपत्वमेव न्याय्यमिति अहमर्थतयाऽऽत्मनः सिद्धिकथनं कथं सङ्गच्छत इति चेत् न, देवदत्तो जानाति, देवदत्तः सुखी, देवदत्तो दुःखीत्यादयोऽपि जायन्ते। अतो देवदत्तपदं शरीरार्थकमात्मार्थकं वेति सन्दिग्धतया विचारोऽपेक्षीयतामापद्यते। विचारश्च प्रवर्तमानो देवदत्तादिपदस्य आत्मपरत्वमेव अवधारयति। 'देवदत्तो जानाति' इत्यादिभूरिप्रयोगजातस्य देवदत्तपदस्य आत्मपरत्व एव सम्भवात्। 'देवदत्तो गच्छति' इति प्रत्ययोऽपि देवदत्तपदस्यात्मरूपत्वे शक्य-निर्वाहः, आख्यातस्य यत्नार्थकत्वात्। तत्राश्रयत्वमेव आख्यातार्थ इति प्रमाणयितुमशक्यत्वात्। अतो देवदत्तादिपदं देवदत्तादिशरीरावच्छिन्नात्मनि एव शक्तमित्येव न्याय्यम्। शरीरगतदेवदत्तत्वादिकं स्वाश्रयावच्छेद्यत्वसम्बन्धेन देवदत्तादिपदप्रवृत्तिनिमित्तम्। तच्च स्वाश्रयारम्भकादृष्टवत्त्वम्।

किञ्चाहमिति प्रत्यय आत्मविषयक एव, आत्मभिन्ने तस्याभावात्। स च देवदत्तादिविषयकोऽपि भवति, देवदत्तोऽहमित्यनुभवस्य सर्वमान्यत्वात्।

अतोऽहम्पदसामानाधिकरण्यानुरोधेन देवदत्तपदस्य आत्मपरत्वमेव युक्तम्। न च 'अहं स्थूलः', 'अहं कृशः' इत्यादिप्रत्ययेषु स्थौल्यादिना देहोऽप्यहमर्थतया भासत एवेति वाच्यम्, तत्प्रत्ययानामौपचारिकत्वात्। अन्यथा 'अहमन्धः', 'अहं बधिरः', 'अहं पङ्गुः' इत्यादिप्रत्ययानुरोधेनाहमर्थस्य चक्षुराद्यात्मकत्वमपि मान्यतया आपद्येत। अत इदमेव न्याय्यं यद् "अहं जानामि, द्वेष्मि, करोमि, सुखी" इत्यादि-प्रत्ययमहिम्ना अहमर्थ आत्मैव। एतादृशप्रतीतिभिरात्मनोऽहमर्थकस्य सिद्ध्या अहमिति शब्दघटितवाक्यैरभिलष्यमाना अन्ये प्रत्यया औपचारिकाः।

किञ्च "मम शरीरं, मम चक्षुः, मम पादौ" इत्यादिप्रत्ययाः स्पष्टमेव शरीरादीनामहमर्थभिन्नत्वं साधयन्ति। अहमर्थस्य शरीरादिरूपत्वे भेदनियतसम्बन्धावगाहिनामुक्तप्रत्ययानामुत्पत्त्यसम्भवात्। न च "ममात्मा" इति प्रत्ययोऽपि जायते, अतोऽहमर्थाद् आत्मनोऽन्यत्वमपि प्रसज्यत इति वाच्यम्, तत्रात्मपदस्य मनःपरत्वात्, मनसि आत्मपदस्य बहुलं प्रयोगात्। तदेवं वैशेषिकदृशा आत्मोभयथा सिद्धः, मानसप्रत्यक्षविषयतया अनुमेयतया चेति निर्विवादम्।



# जगदीशगदाधरयोर्मतभेदसमीक्षा

**डॉ. रामलालशर्मा**
प्रवाचकः, न्यायविभागस्य
राष्ट्रियसंस्कृतविद्यापीठे, तिरुपतिः



आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः।।
परं वादिजये शक्तिर्यस्य स्यात् तद्गतिं शृणु।
स एव श्रेष्ठतां याति पाठकानां शतादपि।।
काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्।।

इत्यादीनि स्मृति-पुराणाभाणकानि न्यायशास्त्रप्राशस्त्यमभिवर्णयन्ति।

तत्र गौतमादिगङ्गेशपूर्ववर्तिनां ग्रन्थानां प्राचीनन्यायव्यपदेशः, एतच्च गङ्गेशोपाध्यायैस्तत्र तत्र जरन्नैयायिकप्रयोगाद् अस्माभिर्ज्ञायते। गङ्गेशप्रभृति-वर्तमानन्यायशास्त्रस्य नवीनव्यपदेशो वर्तते। अधुनातनपाठ्यक्रमे परममूलत्वेन चिन्तामणेः स्थानमेव गङ्गेशस्य आधिक्यं प्रकटयति। यथा अलङ्कारग्रन्थेषु काव्यप्रकाशिकाया बहुव्याख्यानवत्त्वं तथा मणिग्रन्थस्यैव व्याख्यानबाहुल्यं वर्तते। सत्स्वप्यनेकव्याख्यानेषु रघुनाथशिरोमणेर्दीधितिव्याख्या अनितरसाधारणी इत्यत्र पाठ्यक्रम एव साक्षीभूतो विद्यते। दीधितिव्याख्यानेष्वपि बहुषु जगदीश-गदाधर-व्याख्याने एव प्रसिद्धे। यतस्ते एव प्रसिद्धतया पठनपाठनयोर्वर्तेते।

एतावुभावपि क्रीस्तोः परं सप्तदशशताब्द्यां वङ्गदेशे स्थिताविति चरित्रकारैः स्पष्टीकृतम्। गदाधरो जगदीशात् किञ्चिद् अर्वाचीन इति च तैरेव स्पष्टीकृतम्।

दीधितिव्याख्यानावसरे जगदीशगदाधरयोस्तत्र तत्र मतभेदो वर्तते। तथा हि—तत्र पञ्चलक्षण्यां 'साध्याभाववदवृत्तित्व'[१] रूपप्रथमलक्षणे अव्याप्यवृत्ति-साध्यकसद्धेतौ कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिः। तथा हि—साध्याभावः कपिसंयोगाभावस्तदधिकरणम् 'अग्रे वृक्षः कपिसंयोगी मूले न' इति प्रतीत्या प्रतीतिव्यवहाराभ्यां पदार्थसिद्ध्या वृक्षः, तन्निरूपितवृत्तित्वमेव एतद्वृक्षत्वे न तु

१. जा. व्या. पं., पृ. ४९।

वृत्तित्वाभाव इत्यव्याप्तिः। अतः 'साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम्'[१] इति द्वितीयलक्षणं स्वीकृतम्। तथा च नाव्याप्तिः। अग्रे वृक्षः कपिसंयोगी मूले न इति प्रतीतिवद् वृक्षः कपिसंयोगवान्न इति प्रतीतेरभावाद् भेदस्य व्याप्यवृत्तित्वेन साध्यवद्भिन्नः कपिसंयोगवद्भिन्नः कपिसंयोगाभाववान् वृक्षो न भवति; परन्तु गुणादिरेव तद्वृत्तित्वस्य एतद्वृक्षत्वे अभावाल्लक्षणसमन्वयान्नव्याप्तिः।

साध्यवद्भिन्नश्चासौ साध्याभाववाँश्चेति कर्मधारयसमासस्वीकारे साध्यवद्भिन्नावृत्तित्वस्यैव सम्यक्त्वेन साध्याभाववत्पदस्य वैयर्थ्यापत्तिः। तादृशविशेषणघटिताया व्याप्तेर्व्याप्यहेतव इतरभिन्नाः साध्यवद्भिन्नसाध्याभाववदवृत्तित्वादिति इतरभेदसाधकानुमाने साध्यवद्भिन्नसाध्याभाववदवृत्तित्वाभावत्वसमानाधिकरणस्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकसाध्यवद्भिन्ननिरूपितवृत्तितात्वावच्छिन्नप्रतियोगिताकाभावत्वघटितत्वेन व्याप्यतावच्छेदकत्वासम्भवात्। अयञ्च हेतुर्व्याप्यत्वासिद्धो भवेत्। यथा पर्वतो वह्निमान् नीलधूमादित्यत्र नीलधूमत्वसमानाधिकरणनीलधूमत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकधूमत्वघटितत्वेन नीलधूमस्य व्यर्थविशेषणघटितत्वं तद्वत्। व्यर्थविशेषणघटितलक्षणस्य वस्तुतोऽसम्भव एव। इदञ्च गोलोकनाथैः सामान्यनिरुक्तिविवेचिन्यां साक्षात्कारघटितकल्पे स्पष्टीकृतम्। साध्यवद्भिन्ने साध्याभाव इति सप्तमीतत्पुरुषाश्रयणे तु साध्यवद्भिन्नवृत्तित्वस्य साध्याभावे अन्वयेन साध्यवद्भिन्नवृत्तिर्यः साध्याभाव इत्यर्थलाभेन तत्र साध्यवद्भिन्नावृत्तित्वस्याघटकत्वान्न, साध्याभाववत्पदस्य वैयर्थ्यशङ्कावकाशः।

तथा च साध्यवद्भिन्नवृत्तिर्यः साध्याभावस्तद्वदवृत्तित्वमिति लक्षणस्य स्वरूपं पर्यवसन्नम्। साध्याभावे साध्यवद्भिन्नवृत्तित्वविशेषणं तु कपिसंयोगी एतद्वृक्षत्वादित्यादौ अव्याप्तिवारणार्थमेव। साध्याभावपदानिवेशे साध्यवद्भिन्नवृत्तिर्यस्तद्वदवृत्तित्वमात्रोक्तौ वह्निमान् धूमादित्यादौ वह्निमद्भिन्नह्रदवृत्तिद्रव्यत्वादिमतिं पर्वतादौ धूमस्य सत्त्वादव्याप्तिः। अतः साध्याभावपदनिवेशः।

साध्यपदानिवेशे वह्निमान् धूमादित्यत्र अव्याप्तिः। तथा हि—साध्यवद्भिन्नह्रदवृत्तिर्योऽभावो घटाभावः, तदधिकरणं यथा ह्रदादि तथा पर्वतादिः, तत्र घटस्याभावात्, तद्वृत्तित्वमेव धूमे इत्यव्याप्तिः। अतः साध्यपदनिवेशः। तथा च नाव्याप्तिः। ह्रदवृत्तिर्यः साध्याभावो घटाभावो न भवति, घटाभावस्य साध्याभावानात्मकत्वात्; परन्तु वह्न्यभावतदधिकरणं न पर्वतादिः; परन्तु ह्रदादिरेव तद्वृत्तित्वाभावस्य धूमे सत्त्वान्नाव्याप्तिः।

---

१. जा. व्या. पं., पृ. ५०।

एतल्लक्षणे अधिकरणभेदेनाभावभेदोऽवश्यमङ्गीकर्तव्यः, अन्यथा कपिसंयोगी एतद्वृक्षत्वादित्यत्र अव्याप्तिरेव। तथा हि—साध्यवद्भिन्नो गुणादिः, तद्वृत्तिर्यः साध्याभावः कपिसंयोगाभावस्तदधिकरणं पुनः वृक्षादिः, तद्वृत्तित्वस्यैव हेतौ सत्त्वेन अव्याप्तिः। अधिकरणभेदेन अभावभेदस्वीकारे तु गुणवृत्तिकपि-संयोगाभावस्य वृक्षवृत्तिकपिसंयोगाभावस्य च भिन्नत्वेन साध्यवद्भिन्न-गुणवृत्तिकपिसंयोगाभावाधिकरणं गुणादिरेव न तु वृक्षादिः, अतो नाव्याप्तिः। तथा चाधिकरणभेदेनाभावभेदस्वीकारे साध्यपदस्य वैयर्थ्यापत्तिः। तथा हि, साध्यपदाभावे घटाभावादिकमादाय वह्निमान् धूमादित्यत्र अव्याप्तिर्दत्ता, अधिकरणभेदेन अभावभेदस्वीकाराद् ह्रदवृत्तिघटाभावाधिकरणं ह्रदादिरेव न तु पर्वतादिः, पर्वतवृत्तिघटाभावस्य ह्रदवृत्तिघटाभावापेक्षयाभेदात्, तादृशह्रदनिरूपित-वृत्तित्वाभावस्य धूमे सत्त्वान्नाव्याप्तिः। अतः साध्यपदस्य वैयर्थ्यापत्तिरिति प्राप्तौ—

अत्र जगदीशतर्कालङ्कारैरभावसामान्यस्याधिकरणभेदेन भेदमङ्गीकृत्य एवमुक्तम्—'स्वप्रतियोगितावच्छेदकसम्बन्धेन साध्यवद्भिन्ने वर्तते यः साध्यता-वच्छेदकसम्बन्धेन साध्यीयोऽभावतद्वदवृत्तित्वमर्थः'[1]। अत्र लक्षणे साध्यता-वच्छेदकसम्बन्धेन साध्यीयत्वार्थकसाध्यपदानुपादाने स्वप्रतियोगितावच्छेदकीभूत-समवायादिसम्बन्धेन वह्निमद्भिन्ने वर्तते योऽभावः समवायेन वह्न्यभाव-स्तद्वदवृत्तित्वस्य धूमादावभावाद् अव्याप्तिः। साध्यतावच्छेदकसम्बन्धेन साध्यीयत्वार्थकसाध्यपदनिवेशे स्वप्रतियोगितावच्छेदकसंयोगसम्बन्धेन साध्यवद्भिन्ने ह्रदादौ वृत्तिः, यः साध्यतावच्छेदकसम्बन्धेन वह्न्यभावस्तद्वान् ह्रद एव, तद्वृत्तित्वाभावस्य धूमे सत्त्वान्नाव्याप्तिः। अतः साध्यपदं न व्यर्थमिति।

गदाधरभट्टाचार्यास्तु अभावसामान्यस्य अधिकरणभेदेन भेदं नाङ्गीकुर्वन्ति; परन्तु कपिसंयोगाद्यभावानामेव भेदमङ्गीकुर्वन्ति। तेषामयमाशयः—'द्रव्ये संयोगसामान्याभावे संयोगसामानाधिकरण्यं न तु गुणे' इति। प्रतीतिसत्त्वात् संयोगाभावे प्रतियोगिसामानाधिकरण्यवैयधिकरण्यरूपविरुद्धधर्मद्वयसमावेशात् तादृशाभावस्यैवाधिकरणभेदेन भेदः, न तु अभावसामान्यस्य तथा च घटाभावादीनां भेदाभावाद् ह्रदवृत्तिघटाभावः पर्वतेऽपि वर्तते तथा च साध्यवद्भिन्नह्रदवृत्तिघटा-भावाधिकरणपर्वतनिरूपितवृत्तित्वस्यैव धूमे सत्त्वादव्याप्तिः, अतः साध्यपदम्। तथा च नाव्याप्तिः। ह्रदवृत्तिः साध्याभावो वह्न्यभावस्तदधिकरणं ह्रदाद्येव तद्वृत्तित्वाभावस्य धूमे सत्त्वान्नाव्याप्तिरिति।

---

१. जा. व्या. पं., पृ. ५६।

अत्र उभयोः लक्षणकर्त्रोरभिप्रायप्रकटनविषये मतभेद इदानीं स्पष्टः। अभावसामान्यस्य अधिकरणभेदेन भेद इति जगदीशाभिप्रायः। अव्याप्यवृत्तिप्रतियोगिकाभावस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वरूपविरुद्धधर्माध्यासात् तादृशाभावस्यैवाधिकरणभेदेन भेदः, तथा च कपिसंयोगाद्यभावस्यैवाधिकरणभेदेन भेद इति भट्टाचार्याणां मतम्।

अत्र विचार्यमाणे गदाधराभिप्राय एव साधीयानित्यवगम्यते। तथा हि—प्रथमं जगदीशमतं विचारयामः। अभावभेदे युक्तिः प्रदर्शनीया 'द्रव्ये गगनाभावे द्रव्यत्वसामानाधिकरण्यं न तु गुणे' इति प्रतीत्या गगनाभावेऽपि द्रव्यत्वसामानाधिकरण्यवैयधिकरण्यरूपविरुद्धधर्मसमावेशः प्रदर्शितः। तथापि तन्न शोभनम्, तथा सति द्रव्ये प्रमेयत्वसत्त्वे द्रव्यत्वसामानाधिकरण्यं न तु गुणे इति प्रतीत्या प्रमेयत्वस्यापि अधिकरणभेदेन भेदः सिद्ध्येत्। इष्टापत्तौ च प्रमेयत्वस्य केवलान्वयित्वानुपपत्तिः। अपि च जगदीशमते साध्यपदस्य वैयर्थ्यमेव, साध्यपदाभावे वह्निमान् धूमादित्यत्र अव्याप्तिर्दत्ता, सा च साध्यवद्भिन्नेत्यत्र भेदीयप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणेन, प्रतियोगितायां साध्यावच्छिन्नत्वविशेषणदानेनैव वार्यते। तथा हि संयोग-सम्बन्धावच्छिन्नवह्निमत्त्वावच्छिन्नवह्निमन्निष्ठप्रतियोगिताकभेदः संयोगेन वह्निमान् न इति भेदस्तदधिकरणं न पर्वतादिः, परन्तु ह्रदादिः, तद्वृत्त्यभावः समवायेन वह्न्यभावस्तदधिकरणं ह्रदाद्येव न तु पर्वतादिः, अधिकरणभेदेन अभावभेदात् तद्वृत्त्यभावस्य धूमे सत्त्वान्नाव्याप्तिः, अतः साध्यपदं व्यर्थम्।

अपि च द्वितीयलक्षणपरित्यागबीजभूतदीधितिरेवं वर्तते—'कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह साध्यवत्प्रतियोगिकेति'[1] इति, अत्र कर्मादौ संयोगाद्यभावस्य भिन्नत्वे इत्यनेन कपिसंयोगाद्यभावस्यैवाधिकरणभेदेन भेदो लक्षणकर्तुरिष्ट इति ज्ञायते। यदि अभावसामान्यस्य भेद इष्टः, तदा दीधितिकारोऽ-धिकरणभेदेनाभावभेदे मानाभावादाह साध्यवत्प्रतियोगिकेति इत्यवक्ष्यत्। कर्मादौ संयोगाद्यभावस्येति विशेषनिर्देशेन कपिसंयोगाद्यभावस्यैवाधिकरणभेदेन भेद इति ज्ञायते।

एवमधिकरणभेदेनाभावभेदविषये मतद्वयं प्रदर्श्य तत्र जगदीशमतदृष्ट्या गदाधरमतस्य स्वीकरणीयत्वं सयुक्तिकं प्रतिभातीति।

●

---

१. जा. व्या. पं., पृ. ५६।

# योगदर्शने ईश्वरस्य महत्त्वम्

**डॉ. वीना श्रीवास्तवा**
वरिष्ठ-प्राध्यापिका
संस्कृतविद्याविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



महर्षिः पतञ्जलिर्भक्तानां सन्तोषप्रदानार्थमीश्वरं योगदर्शने स्वीकरोति। ईश्वरः स्वकृपया उपासकानां दोषान् दूरीकृत्य तेभ्यो योगं सुगमं करोति[१]। उपासकाः परमपितुरीश्वरस्य सर्वोच्चविभूतिं, हृदयस्य शुद्धतां, बुद्धेः प्रकाशञ्च प्राप्नुवन्ति। ईश्वरः स्वभक्त्या प्रसन्नो भूत्वा भक्तस्य मार्गात् सर्वान् विघ्नान् निवारयति। साधकस्य विक्षिप्तं चित्तं क्रमश एकाग्रतां लभते। साधकस्य ईश्वरचिन्तनाय उत्तरोत्तरं प्रवृत्तिर्जायते। ईश्वरस्य ध्यानाभ्यासेन यदा चित्तमेकाग्रताया उत्कृष्टावस्थां प्राप्नोति, तदा साधकभक्तस्य स्वरूपानुभूति-र्भवति।

महर्षिपतञ्जलिमतानुसारेण ईश्वरप्रणिधानात् समाधिसिद्धिर्भवति। यथोक्तं योगसूत्रे—'समाधिसिद्धिरीश्वरप्रणिधानात्'[२]। व्यासभाष्ये इदं कथितमस्ति यत् 'तदभिध्यानमात्रादपि योगिनः आसन्नतरः समाधिलाभः समाधिफलं च भवतीति'[३]। श्रीवाचस्पतिमतेनापि इदं स्पष्टमस्ति यद् ईश्वरः समाधितत्फललाभेन योगिन-मनुगृह्णाति। प्रेमात्मकभक्तिस्वरूपप्रणिधानेन ईश्वरो योगिनामुपरि अनुग्रहं करोति, यस्माद् योगिनः कैवल्यञ्च शीघ्रतया प्राप्नुवन्ति।

---

१. "..........this path is the easiest most simple and pleasant of all."—Rai Bahadur Shri Chandra Vasu—'The Yoga-Sutra', p. 32.

२. योगसूत्रम्—२।४५।

३. व्यासभाष्यम्—१।२३, योगसूत्रम्।

जगतो निमित्तकारणत्वेनापि ईश्वरस्य महत्त्वमस्ति। प्रकृतित एव जगतः सृष्टिप्रवृत्त्योर्विकासो जायते, यदा प्रकृतिपुरुषयोः संयोगो जायते, तदैव जगतः सृष्टिर्भवति। परस्परभिन्नयोः प्रकृतिपुरुषयोः संयोगे ईश्वरः सहायको भवति। ईश्वरः जगतो निमित्तकारणमस्तीत्यस्य पुष्टिर्वाचस्पतिमिश्रेण विज्ञानभिक्षुणा च कृता वर्तते। भोजदेवोऽपि प्रकृतिपुरुषयोः संयोगवियोगकर्त्ता ईश्वरोऽस्तीत्यङ्गीकरोति। ईश्वरः स्वप्रयोजनाभावेऽपि भूतानुग्रहार्थमेव प्रकृतिपुरुषयोः संयोगवियोगौ कारयति। भोजवृत्तिकारेणापीदं[१] स्पष्टीकृतम्। तत्त्ववैशारदीकारवाचस्पतिमिश्रानुसारं प्रकृतिरीश्वरेणाधिष्ठिता भूत्वा सृष्टेर्विकासप्रक्रियायाः प्रलयस्य (तिरोभावस्य) च कार्यं सम्पादयति[२]। विज्ञानभिक्षुमतेनेश्वरः प्रकृतेः साम्यावस्थायां क्षोभकर्तृत्वात् सृष्ट्युद्बोधकोऽस्ति। विज्ञानभिक्षुः स्पष्टतः कथयति यत् स क्षोभ ईश्वरेच्छयैव उत्पन्नो भवति[३]। विष्णुपुराणेऽपीदं प्रोक्तम्—

'प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ'।।

योगदर्शने परमगुरो रूपे ईश्वरस्य महत्त्वमपरिहार्यं वर्तते[४]। 'स सर्वेषामपि गुरुः कालेनानवच्छेदात्' इति योगसूत्रमस्ति[५]। व्यासभाष्येऽपीदं वर्णितं वर्तते यत्—'पूर्वे हि गुरवः कालेनावच्छिद्यन्ते यत्रावच्छेद्यार्थेन कालो नोपवर्तते, स एव पूर्वेषामपि गुरुः'। (यो.सू. १।२६) स्वामी आत्मानन्दोऽपि परमगुरो रूपे ईश्वरस्य महत्त्वमङ्गीकरोति। ईश्वर एव ज्ञानस्य पराकाष्ठा वर्तते। 'तत्र निरतिशयं सर्वज्ञबीजम्' (योगसूत्रम्-१।२४)। अस्मादेव स सर्वज्ञोऽस्ति। सर्वज्ञत्वात् स गुरूणामपि गुरुर्वर्तते। ऋषीणां कृतेऽपि मन्त्राणां शिक्षां ददाति (योगवार्त्तिके-

---

१. 'तस्याऽऽत्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम्। (भोजवृत्तिः, १।२५, योगसूत्रम्)

२. अनादौ तु सर्गसंहारप्रबन्धे सर्गान्तरसमुत्पन्नसंजिहीर्षावधिसमये पूर्णे मया सत्त्वप्रकर्ष उपादेय इति प्रणिधानं कृत्वा भगवाञ्जगत्संजहार। (तत्त्ववैशारदी, १।२४)

३. 'प्रकृतिवैषम्यहेतुः क्षोभोऽपि ईश्वरेच्छात एव'। (योगवर्त्तिके, १।२४)

४. 'As the first teacher I & wara is indispensable but devotion to him is just one of many alternative ways of attaining samadhi'. —R.K. Tripathi, 'The problems of Philosophy and Religion'.

५. 'योगसूत्रम्'-१।२६।

१।२६)। अपि ईश्वरः पूर्वपूर्वसर्गाद्युत्पन्नानां ब्रह्मविष्णुमहेश्वरादीनामपि गुरुः पिता च वर्तते।

ईश्वरो वैदिकमन्त्राणां प्रवर्त्तक इति स्वीक्रियते। तेषां माध्यमेन ऋषिभि-र्वैदिकमन्त्राणामुद्धृतिः क्रियते। शुद्धसत्त्वगुणेनैव स (ईश्वरः) अधिपतिरस्ति। येषु जीवेषु सत्त्वगुणस्य प्राधान्यं भवति, ते ज्ञानिनो गुरवो महात्मानश्च कथ्यन्ते। ते लोकोत्तराः पुरुषा भवन्ति; परन्तु जीवे सत्त्वगुणस्य प्राधान्येऽपि रूपान्तरेण रजोगुणतमोगुणानामपि अंशा वर्तमाना भवन्ति। अस्मादेव जीवा अपि ईश्वराभिमुखा भवन्ति; परन्तु स्वयमीश्वरस्वरूपा न भवन्ति। ईश्वरे तु शुद्धं सत्त्वं विद्यते। तस्मिन् रजस्तमसोः लेशमात्रमपि नास्ति। शुद्धसत्त्वादेव स ईश्वरोऽस्ति।

योगदर्शने ईश्वरभावनया प्रत्यक्चेतनस्य साक्षात्कारो भवति। ईश्वरः प्रसन्नो भूत्वा व्याध्यादिविघ्नान् दूरीकरोति। 'ततः प्रत्यक्चेतनाधि-गमोऽन्तरायाभावश्च' इति योगसूत्रम् (१।२९)। ईश्वरभावनया प्रत्यक्चेतनस्य साक्षात्कारो भवति। अत्रेयं शङ्का जायते यद् यस्य भावना क्रियते तस्यैव प्रत्यक्षं जायते। ईदृशो नियमोऽस्ति। अत ईश्वरविषयकचिन्तनादीश्वरस्य साक्षात्कारो भवतु, कथं प्रत्यग्भूतस्य जीवात्मनः साक्षात्कारः? अस्याः शङ्कायाः समाधानं चेत्थं वर्तते यत् पुरुषविशेष ईश्वरोऽस्ति। पुरुषत्वेन ईश्वरतुल्यतया जीवात्मनोऽपि साक्षात्कारो भवति। योगवार्तिके (१।२९) उक्तमस्ति यद् ईश्वरप्रणिधानात् तत्साक्षात्कारद्वारा तद्दृष्टान्तेन जीवतत्त्वमपि अनायासेन पूर्णतया साक्षात् क्रियते।

ईश्वरभावनया अन्तरायाणामपि अभावो भवति। अन्तरं विवरं विच्छेदं कुर्वन्त आयान्तीत्यन्तराया इति व्युत्पत्त्या ये चित्तस्य ध्येयाकारताविच्छेद-रूपविघ्नान् उत्पादयन्ति ते विघ्ना एव अन्तरायपदवाच्या भवन्ति।

ईश्वरभावनया व्याध्यादिविघ्नानामभावो भवति। अतोऽत्र स्वाभाविकः प्रश्नो जायते यत् चित्तस्य विक्षेपकारकाः के सन्ति? अस्योत्तररूपेणेदमायाति— 'व्याधिस्त्यानसंशयप्रमादालस्यादिविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः'।

इमे व्याध्यादयश्चित्तं योगपक्षाद् विक्षिपन्ति। अत इमे 'विक्षेपाः' कथ्यन्ते। तत्त्ववैशारदीकारोऽपि कथयति यच्चित्तस्य विक्षेपाः—चित्तं खल्वमी व्याध्यादयो

योगाद्विक्षपयन्ति अपनयन्तीति विक्षेपाः। इत्थमिमानि योगान्तरायाण्यपि सन्ति— व्याधिः, स्त्यानम्, संशयः, प्रमादः, आलस्यम्, अविरतिः, भ्रान्तिदर्शनम्, अलब्धभूमिकत्वम्, अनवस्थितत्वम्, श्वासप्रश्वासाः।

शरीरधारकधातुरसकरणानां वैषम्येन शरीरगठने उत्पन्ना अव्यवस्था 'व्याधि'पदवाच्या भवति। वातपित्तकफधातूनां परिणामे अनावश्यकी वृद्धिर्ह्रासश्च धातुवैषम्यं भवति। भुक्तस्यान्नस्य, पीतस्य जलादेः सम्यक्परिपाकाभाव एव रसवैषम्यमस्ति। चक्षुरादीन्द्रियाणां शक्तिक्षयः करणवैषम्यमुच्यते। अनारोग्येण साधकस्य कृते योगसाधनायां बाधा जायते।

यस्य चित्तं योगानुष्ठाने असमर्थं जायते, तदा योगसाधनायां स क्षमो न भवति। इयमेव मानसिकी असमर्थता 'स्त्यान'पदवाच्या भवति।

यदि साधकस्य कृते गुरूपदिष्टसाधनमार्गे 'अयं मार्गो दोषरहितोऽथवा दोषपूर्णोऽस्तीति' संशयो भवति अथवा योगसाधना मया कर्त्तुं शक्यते, न वेत्याकारिका उभयकोटिकसंशयात्मकचित्तवृत्तिर्जायते, सा 'वृत्तिः' इति कथ्यते। अतः संशयचित्तः साधकः कदापि एकाग्रचित्तेन मनसा योगसाधनां न कर्त्तुं शक्नोति। उत्साहपूर्वकं योगाभ्यासाकरणं प्रमादः। उत्साहरहितो व्यक्तिः कदापि प्रयत्नशीलो न भवितुमर्हति।

तमोगुणाधिक्येन शरीरचित्तयोर्गुरुत्वानुभव एव तत्फलस्वरूपसाधने प्रवृत्त्यभावः 'आलस्यं' जायते।

'अविरतिः' योगस्य प्रमुखशत्रुर्भवति। विषयासक्तं चित्तं योगसाधनाय प्रयत्नशीलं न भवितुमर्हति।

'योगः' समाधेः साधको नास्तीति विपरीतदर्शनं (ज्ञानं) भ्रान्तिदर्शन-पदवाच्यं भवति। ईदृशी भ्रमात्मिका बुद्धिः साधकं योगमार्गान्निवर्तयति।

यदा साधने कृतेऽपि योगी योगभूमिं न प्राप्नोति, तदा 'अलब्धभूमिकत्वं' भवति।

मधुमत्यादिभूमिषु मध्ये यदि एकस्या अधिभूमेर्यथावस्थितिर्भवति तथा तत्प्राप्त्यनन्तरं योगाभ्यासी स्वस्य कृतकृत्यतां स्वीकरोति, तदा स समाधिं न प्राप्नोति, अपि तु तस्य प्राप्तभूमिरपि नष्टा भवति।

दु:खं त्रिविधं भवति—आध्यात्मिकाधिभौतिकाधिदैविकभेदात्। इच्छाया: पूर्त्यभावान्मनसि जायमान: क्षोभो दौर्मनस्यमिति कथ्यते। शरीराङ्गेषु कम्पनम् अङ्गमेजयत्वं भवति। शरीरस्य कम्पनेन आसनानि न सिद्ध्यन्ति।

इच्छाया अभावेऽपि बहिर्देशाद् अन्तःप्रवेश: श्वासो भवति। इच्छा-मन्तरेण अन्त:प्रदेशाद् वायोर्बहिर्निष्क्रमणं प्रश्वासो भवति। अनेन प्रकारेण श्वासप्रश्वासयो: क्रिया: समाध्यङ्गभूतप्राणायामविरोधिन्य: सन्ति।

**निष्कर्ष: —**

इयं आलोचना क्रियते यद् योगदर्शने ईश्वरप्रतिपादकसूत्राणि प्रक्षिप्तानि सन्ति, पुस्तकस्य चावशिष्टभागेन सह असम्बद्धानि वर्तन्ते[१]; परन्तु अस्योपरि यदि गाम्भीर्येण विचार: क्रियते तदा स्पष्टमिदं भवति यद् आपत्तिरियं युक्तिसङ्गता नास्ति। यत: सर्वप्रथमं मनसि विचारा आयान्ति यद् ईश्वरात्मकं तत्त्वं किमस्ति? अस्य किं स्वरूपम्? यस्य ध्यानं मया कार्यम्।

ईश्वरप्रणिधानस्यैव यदि पुस्तकेन सहासम्बद्धत्वं स्वीक्रियते, तदा योगशास्त्रस्य अष्टाङ्गयोगे आपत्तिरायाति।

इदमपि ध्यातव्यं यन्नियमान्तर्गत[२] एव ईश्वरप्रणिधानस्याप्युल्लेखो वर्तते।

वस्तुत: साधनामार्गे भक्तेर्विशेषस्थानं वर्तते। अत ईश्वरस्य व्यावहारिकमहत्त्वमधिकमस्ति। योगदर्शने ईश्वरप्रणिधानेन भक्तियोगस्य स्थापना क्रियते। यदि केनचिदिदं स्वीक्रियते यद् योगदर्शने ईश्वरप्रणिधानरूपभक्त्युपरि विशेषविचारो दृश्यते, न तु ईश्वरविषयको

---

१. (क) 'The idea of God far from being organically inter-woven in theYoga system is only loosly inserted. In the Yoga Sutras the passages that treat of God stand disconnected and are indeed in direct contradiction to the contents and aim of the system'

—James Hastings 'Encyclopaedia of Religion and Ethics'. Vol. XII. p. 83.

(ख) डॉ. राधाकृष्णन्—'भारतीयदर्शनम्', भाग: २।

२. 'शौचसन्तोषतप:स्वाध्यायेश्वरप्रणिधानानि नियमा:'। (योगसूत्रम्, २।३२)

विचारः, तदा प्रश्नोऽयमुपस्थितो भवति यत् कस्य भक्तिः कर्त्तव्या? तत्पश्चाद् अस्योत्तररूपे ईश्वरस्य नाम आयाति।

इत्थम्, उपर्युक्तदृष्ट्या योगदर्शने ईश्वरस्य महत्त्वं नूनमेव वर्तते। वस्तुत ईश्वरभक्तेः, ईश्वरस्य च समावेशाद् योगदर्शनं सरसं भवतीति।



# सविकल्पकप्रत्यक्षमयाः प्राणाः

**डॉ. कमलेशमिश्रः**
उपाचार्यः, स्नातकोत्तरन्यायदर्शनविभागस्य
श्रीजगन्नाथसंस्कृतविश्वविद्यालये
श्रीविहारः, पुरी



लोके प्रत्यक्षशब्दस्य व्यवहारोऽर्थत्रये प्रसिद्धः प्रत्यक्षप्रमाण-प्रत्यक्ष-प्रमाणोत्पन्नज्ञान-प्रत्यक्षज्ञानविषयभेदेन। तत्र प्रतिगतमक्षम् (विषयं प्रतिगतमक्षम् = इन्द्रियम्) प्रत्यक्षमिति व्युत्पत्त्या विषयसन्निकृष्टेन्द्रियमेव प्रत्यक्षप्रमाणमिति स्पष्टम्। न्यायभाष्येऽपि—अक्षस्य अक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षमिति व्युत्पत्तिः[१]।

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति[२] सूत्रेण प्रत्यक्षप्रमार्थे प्रत्यक्षशब्दप्रयोगः सिद्धः।

'आत्मा प्रत्यक्ष' इत्यत्र ज्ञानविषयकार्थे प्रत्यक्षशब्दः सुप्रयुक्तः। व्युत्पत्तिश्चात्र 'प्रत्यक्षमस्यास्तीति'।

एतेन प्रत्यक्षशब्दप्रयोगः 'इन्द्रियजन्यप्रमायां, तत्करणे इन्द्रियजन्य-प्रमाविषयभूतपदार्थे च' इत्युपपत्तिः।

तत्र प्रत्यक्षानुभवप्रमाणभूतानामिन्द्रियाणां षड्विधत्वाङ्गीकाराद्[३] घ्राणज-रासन-चाक्षुष-स्पार्शन-श्रावण-मानसभेदेनाभिमतं प्रत्यक्षं प्रत्येकं द्विविधं निर्विल्पकसविकल्पकभेदात्।

परन्तु न्यायसूत्रे न क्वापि निर्विकल्पकसविकल्पकशब्दाभ्यां प्रत्यक्षविभागो विहितः। तात्पर्यटीकाकारेण तु निर्विकल्पकसविकल्पकभेदः स्पष्टतया प्रदर्शितः।

---

१. 'अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम्। वृत्तिस्तु सन्निकर्षो ज्ञानं वा'। (न्या.भा., १।१।३)

२. न्या.सू., १।१।४।

३. 'घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि षडिति'। (प्र.पा.भा., पृ. ४४२)

तथा हि—'इह द्वयी प्रत्यक्षजातिरविकल्पिका सविकल्पिका चेति। तत्रोभयी इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीति लक्षणेन सङ्गृहीतापि स्वशब्देन उपात्ता। तत्र विप्रतिपत्तेस्तत्राविकल्पिकाया: पदमव्यपदेश्यमिति सविकल्पिकायाश्च व्यवसायात्मकमिति[१]।

**जयन्तभट्टेन** न्यायमञ्जर्यां निर्विकल्पकं सविकल्पकञ्चेति प्रत्यक्षद्वयं व्याख्यातम्। न्यायभूषणकारेण अव्यपदेश्य[२]पदेन निर्विकल्पकस्य व्यवसायात्मक-पदेन च सविकल्पकस्य ग्रहणमिति सयुक्तिकं प्रतिपादितम्।

'सविकल्पकञ्च विशिष्टस्य ग्रहणम्'[३] इति सप्तपदार्थीकारेण। सप्रकारकं ज्ञानमिति अन्नम्भट्टेन च तर्कसङ्ग्रहे निगदितम्। वैशिष्ट्यविषयकं विशेषणविशिष्टं सप्रकारकं वा ज्ञानं सविकल्पकं[४] भवति। वैशिष्ट्यं च विशेष्यविशेषणसम्बन्ध इति नामजात्यादिविशेषणविशेष्यसम्बन्धावगाहिज्ञानमेव सविकल्पकमिति[५] दीपिकायां स्पष्टम्। तथा च नामादिभिर्विशिष्टार्थविषयं सविकल्पकमिति तार्किकरक्षायाम्। यस्मिन् ज्ञाने विशेषणं विशेष्यं तदुभयसम्बन्धश्च विषयत्वेन भासन्ते, तत् सविकल्पकमिति सिद्धम्। तत्त्वचिन्तामणौ सविकल्पकञ्च[६] विशिष्टज्ञानमिति सूपपादितम्। यथा घटोऽयमिति घटघटत्वयोर्वैशिष्ट्यावगाहिज्ञानम्। अत्र घटनिष्ठा विशेष्यता घटत्वनिष्ठा विशेषणता समवायनिष्ठा संसर्गता च भासन्ते। डित्थोऽयं ब्राह्मणोऽयं श्यामोऽयमित्यादिकमपि विशेष्यविशेषणसम्बन्धावगाहिज्ञानम्। डित्थपदेन नाम्नो ब्राह्मणपदेन जाते: श्यामपदेन गुणस्य च ग्रहणम्। एतानि सर्वाणि तत्तद्विशेष्यै: सह सम्बद्धानि ज्ञानविषयीभवन्तीति तत्तज्ज्ञानं सविकल्पकमेव। इदं सविकल्पकज्ञानं व्यवसायात्मकपदेन व्यपदिश्यते। 'घटमहं जानामि' इत्यादिना अनुव्यवसायात्मकज्ञानेन व्यवसायात्मकज्ञानस्य प्रत्यक्षत्वम्।

**बौद्धा** निर्विकल्पकमेव प्रत्यक्षं स्वीकुर्वन्ति, न तु सविकल्पकम्, ज्ञानस्य स्वलक्षणमात्रविषयकस्यैव प्रमात्वात्। प्रथमाक्षपातसमनन्तरं यज्ज्ञानं प्राथमिकं तत्

---

१. ता.टी., १।१।४; २. न्या.भू., पृ. ९९।

३. विशिष्टस्य ग्रहणं सविकल्पकम्। (स.प., पृ. १२६)

४. त.सं., पृ. ४३; ५. दीपि., पृ. २३८।

६. सविकल्पकञ्च विशिष्टज्ञानं यथा गौरयमिति। तच्च सामान्यादीनां परमार्थसत्त्वेनार्थ-जत्वादिन्द्रियजत्वाच्च प्रत्यक्षम्। (त.चि.म., प्रत्यक्षखण्डे, सविकल्पकवादे)

स्वलक्षणमात्रविषयकं निर्विकल्पकप्रमाणम्। अविसंवादकत्वं प्रमाणसामान्यलक्षणं **प्रमाणवार्त्तिके धर्मकीर्त्तिना** प्रोक्तम्। तदुक्तम्—प्रमाणमविसंवादिज्ञानमिति[1]।

अविसंवादकत्वञ्च प्रापकत्वम्। अर्थस्य क्षणिकत्वेन प्राप्तिकाले दृष्टस्य नष्टत्वेन दृष्टवस्तुन: प्राप्त्यसम्भवेऽपि तत्सन्तानघटकवस्तुप्राप्तेरेकसन्तान-विषयकाध्यवसायजननेनैव प्रापकत्वम्। अनुमानन्तु आरोपितार्थविषय:, तथापि मूलभूतवस्तुक्षणपारम्पर्यप्रभवत्वान्मणिप्रभामणिबुद्धिवत् तत्प्राप्त्या प्रापकत्वमिति। बौद्धनये धर्मधर्मिरूपवस्तुद्वयं नास्ति। वस्तुस्वरूपं धर्मधर्मिभावादिकल्पनाहीनत्वात् स्वलक्षणमित्युच्यते। वासनाया आकारा: कल्प्यन्ते। आकाराश्च मिथ्यावासनाधीनत्वात्, तद्विषयत्वाच्च सविकल्पकमप्रमाणम्। स्वलक्षणस्य स्वं सर्वतो व्यावृतं लक्षणं वस्तुरूपं यस्य तदिति व्युत्पत्ति:।

**नैयायिका** इदं न सहन्ते। अनुमाने प्रदर्शनमेव न वर्त्तते का कथा तस्य प्रापणस्य इति। प्रत्यक्षे प्रदर्शनं वर्त्तत इति सत्यं किन्तु यत् प्रदर्शितं तन्न प्राप्यते क्षणिकत्वेनातिक्रान्तत्वात्। न च सन्तानप्राप्त्या तत्प्राप्तिरिति सन्तानस्य भेदाभेदविकल्पाभ्यामनुपपन्नत्वात्[2]। बौद्धमतं न्यायकन्दलीकारेण तथा शङ्करमिश्रेण स्वस्वग्रन्थे खण्डितमेव। तत्त्वचिन्तामणिकारेण तत्त्वचिन्तामणौ सविकल्पकवादे प्रत्यभिज्ञापि सविकल्पकरूपेति प्रतिपादितम्। सोऽयं देवदत्त इत्यत्र देवदत्ते तत्तांश इदत्वञ्च भासेते इति निरूपितम्।

सविकल्पकप्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम्। लौकिके षोढा सन्निकर्षा:। अलौकिके त्रिविधा: सन्निकर्षा: स्वीकृता:।

न्यायशास्त्रे जन्यसविकल्पकस्य यथार्थायथार्थभेदेन भेदद्वयं सुप्रसिद्धम्। किन्तु ईश्वरप्रत्यक्षं नित्यम्। इदमपि सविकल्पकविशिष्टज्ञानात्मकं यथार्थञ्च।

सविकल्पकज्ञानस्य केचन भेदा वर्त्तन्ते ये विषयतासम्बन्धे ज्ञातव्या:, यथा—एकत्र एकावगाहि, एकत्र द्व्यवगाहि, उभयत्र एकावगाहि, समूहालम्बनम्, विशिष्टवैशिष्ट्यावगाहि, उपलक्षितवैशिष्ट्यावगाहि चेति।

---

१. न्यायमञ्जर्य्यामुल्लिखितम्, प्रथमाह्निके प्रमाणलक्षणप्रकरणे।

२. न्या.म., पृ. ६४।

**एकत्र एकावगाहि**

यज्ज्ञानमेकस्मिन् धर्मिणि कमपि धर्ममेकं विषयं करोति, तदेकत्रावगाहीति उच्यते। यथा भूतलं घटवदिति ज्ञानमेकस्मिन् धर्मिणि भूतले धर्ममेकं घटं विषयं करोति। अत्र भूतले घटनिष्ठप्रकारतानिरूपितविशेष्यता एका, घटे च भूतलनिष्ठविशेष्यतानिरूपितप्रकारता एका। ज्ञाने च घटनिष्ठप्रकारता-निरूपितप्रकारिता भूतलनिष्ठविशेष्यतानिरूपितविशेष्यता एकविशिष्टज्ञानत्वात्, विशेष्यविशेषणसम्बन्धस्यापि विशिष्टज्ञानविषयत्वात्। तथा च ज्ञानेऽस्मिन् घटभूतलसंयोगस्यापि विषयता संसर्गताख्या। संसर्गतायाश्च निरूप्यनिरूपकभावः प्रकारताविशेष्यताभ्याम्। ज्ञाने संसर्गतानिरूपिता संसर्गिता। ययोर्विषयतयो-र्निरूप्यनिरूपकभावः, तन्निरूपितविषयतयोरवच्छेद्यावच्छेदकभावः। तथा च प्रकारतासंसर्गताविशेष्यतासु निरूप्यनिरूपकभावत्वात् प्रकारितासंसर्गिता-विशेष्यितासु अवच्छेद्यावच्छेदकभावः। अतः संयोगसम्बन्धावच्छिन्नसंयोगनिष्ठ-संसर्गतानिरूपितघटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यताशालिज्ञानमिति विषय-तया ज्ञानम्, संयोगनिरूपितसंसर्गित्वावच्छिन्नघटनिरूपितप्रकारित्वावच्छिन्न-भूतलनिरूपितविशेष्यिताश्रयज्ञानमिति विषयितया ज्ञानञ्चेति।

**द्व्यवगाहिज्ञानम्**

यज्ज्ञानमेकस्मिन् धर्मिणि एकत्र स्वतन्त्ररूपेण धर्मद्वयं विषयं करोति, तदेव ज्ञानमिति। तथा भूतलं घटपटवत्। अत्र घटनिष्ठप्रकारता पटनिष्ठप्रकारता चेति प्रकारताद्वयेन निरूपिता एका विशेष्यता भूतले।

न च भूतलं घटपटोभयवत्, अथवा भूतलं घटविशिष्टपटवद् इत्यादावेकत्र द्व्यवगाहिज्ञानमिति वाच्यम्, एकधर्मिणि घटपटयोः स्वतन्त्रतया अविषयाद् एकविशिष्टापररूपेण विषयाङ्गीकारात्।

**उभयत्र एकावगाहि**

यज्ज्ञानं स्वतन्त्रतया धर्मिद्वये धर्ममेकं विषयं करोति, तदुभयत्र एकावगाहीति। यथा 'घटः पटश्च द्रव्यम्'। अत्र घटनिष्ठविशेष्यता-पटनिष्ठविशेष्यतानिरूपिता एका प्रकारता द्रव्यत्वे।

**समूहालम्बनम्**

यज्ज्ञानमेकधर्मविशिष्टधर्मिणि अनेकधर्मान् अथवा विभिन्नधर्म-विशिष्टविभिन्नधर्मिणि अनकेधर्मान् विषयान् करोति, तत् समूहस्य विषयकरणात् समूहालम्बनमिति। यथा भूतलं घटवत् पटवच्च। अत्रेदं ज्ञानमेकधर्म-भूतलत्वविशिष्टभूतलधर्मिणि घटपटानेकधर्मान् विषयान् करोति। 'भूतलं घटवत्, महानसञ्च वह्निमत्' इति ज्ञानं भूतलत्वविशिष्टभूतले महानसत्वविशिष्टमहानसे घटवह्निरूपानेकधर्मान् विषयान् करोति। समूहालम्बने प्रकारताया भेदेन विशेष्यताया भेदोपगमात्। यस्मिन् ज्ञाने एकाधिकमुख्यविशेष्यता वर्त्तते तज्ज्ञानं समूहालम्बनं वेत्युच्यते। मुख्यविशेष्यता च प्रकारतानवच्छिन्ना।

**विशिष्टवैशिष्ट्यावगाहि**

यज्ज्ञानं धर्मिणि केनापि धर्मेण विशिष्टस्य वैशिष्ट्यसम्बन्धं विषयं करोति तदेव। यथा—'रक्तो दण्ड:' इति ज्ञानोत्पन्नं 'रक्तदण्डवान् पुरुष:' इति ज्ञानं 'रक्तो दण्ड:' इति ज्ञानेन गृहीतस्य रक्तत्वविशिष्टदण्डस्य संयोगं विषयं करोति। तेन च रक्तत्वविशिष्टदण्डवैशिष्ट्यावगाहीत्युच्यते। न चात्र ज्ञाने पुरुषेण सह रक्तदण्डस्य संयोगभानं सामान्यसंयोगरूपेण किन्तु रक्तदण्डप्रतियोगिकसंयोगत्वरूपेण। अतोऽस्य ज्ञानस्य संयोगनिष्ठसंसर्गता रक्तदण्डप्रतियोगिकत्वावच्छिन्ना। दण्डनिष्ठप्रकारता रक्तत्वावच्छिन्ना। तथा च रक्तदण्डप्रतियोगितावच्छिन्नसंयोगनिष्ठसंसर्गता-निरूपितरक्तदण्डनिष्ठप्रकारतानिरूपितपुरुषनिष्ठविशेष्यताशालिज्ञानरूपेण अथवा संयोगनिष्ठसंसर्गतानिरूपितरक्तत्वावच्छिन्नदण्डनिष्ठप्रकारतानिरूपितपुरुषनिष्ठविशेष्यता-शालिज्ञानरूपेण एतज्ज्ञानस्य परिचिति:। इदञ्च ज्ञानं रक्तदण्डाभाववान् पुरुष इति ज्ञानस्य प्रतिबन्धकम्।

यज्ज्ञानं विशेष्ये विशेषणं विशेषणे विशेषणान्तरञ्च विषयं करोति तद् द्वितीयविशेषणेन उपलक्षितप्रथमविशेषणवैशिष्ट्यग्राहकज्ञानमिति व्यपदिश्यते। यथा रक्तदण्डवान् पुरुष इति ज्ञानं पुरुषे रक्तत्वविशिष्टदण्डस्य सम्बन्धं न विषयं करोति किन्तु पुरुषे दण्डसम्बन्धं दण्डे च रक्तत्वसम्बन्धं विषयं कृत्वा रक्तत्वोपक्षितदण्डवैशिष्ट्यग्राहकं भवति। अत्र संयोगनिष्ठसंसर्गतावच्छेदकं संयोगत्वमात्रम्, न तु रक्तत्वविशिष्टदण्डप्रतियोगिकत्वम्। किञ्च दण्डनिष्ठप्रकारताया

अप्यवच्छेदकं दण्डत्वमात्रम्, न तु रक्तत्वमिति। तथा च रक्तदण्डनिष्ठ-प्रकारतानिरूपितसंयोगत्वमात्रावच्छिन्नसंसर्गतानिरूपितपुरुषनिष्ठविशेष्यताशालि-ज्ञानरूपेण अथवा रक्तत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नदण्डनिष्ठप्रकारता-निरूपितविशेष्यताशालिज्ञानरूपेणास्य परिचितिः। इदञ्च ज्ञानं 'रक्तदण्डाभाववान् पुरुषः' इति ज्ञानस्य न प्रतिबन्धकं न वा अनेनापि प्रतिबध्यमिति।

वस्तुतः सविकल्पकज्ञानं निर्विकल्पकपूर्वकम्। निर्विकल्पकज्ञानेन सर्वव्यवहारो नैव सम्भवति, किन्तु सविकल्पकज्ञानेन। सविकल्पकज्ञानं विना लोकयात्रानिर्वाहो नैव सुकरः। अत एव **जयन्तभट्टेन** न्यायमञ्जर्यां यथार्थतया **'नैयायिकानाञ्च सविकल्पकप्रत्यक्षमयाः प्राणाः'** इति प्रत्यपादीति।



# अवधिः पञ्चम्यर्थः

**डॉ. राममनोहरमिश्रः**
व्याकरणविभागः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी



'स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्' इति सूत्रे पाणिनिना निर्दिष्टानामेकविंशतिभेदेन भिन्नानां सुपां त्रीणि त्रीणि प्रथमादयः संज्ञाः प्राचामनुरोधेन पाणिनिव्याकरणेऽपि स्वीकृताः सन्ति। तेषामर्थानां कारकत्वाकारकत्वविषये च बहवो विचाराः कृताः सन्ति तत्तदाकरग्रन्थेषु। तत्र पञ्चमीविभक्त्यर्थविषये तदर्थस्य कारकत्वविषये च वादिनां विवादं दृष्ट्वा पञ्चम्यर्थो मया यथामति विचार्यते। सुपामर्थनिरूपणावसरे कौण्डभट्टेन कारिका उपन्यस्ता वैयाकरणभूषणसाराख्ये ग्रन्थे[१]—

आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा।
यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः।।

उक्तेष्वर्थेषु पञ्चम्यर्थोऽवधिः। यद्यपि[२] 'अपादाने पञ्चमी' इति सूत्रेणापादाने पञ्चमीविधानात् पञ्चम्यर्थोऽपादानमेव लभ्यते, यस्मिन्नर्थे प्रत्ययः प्रत्ययस्यापि तदेवार्थ इति नियमात्। तथापि अपादानमवधिरूपमेव ध्रुवमपायेऽपादानमिति नियमात्।

विश्लेषजनकक्रियायामवधिभूतं कारकमपादानसंज्ञकं भवतीति तत्सूत्रार्थात्। तस्मादवधिरेव पञ्चम्यर्थ इति वैयाकरणानां सिद्धान्तः। तथा चोक्तम्—'अवधिः पञ्चम्यर्थः'।[४] 'पञ्चम्यर्थोऽवधिः'[५] इति नागेशेनापि प्रतिपादितत्वात्।

---

१. वै.भू.सा. सुबर्थनिर्णयः, कारि. २४; २. पा.सू. २/३/२८।
३. पा.सू. १/४/२४; ४. वै.भू.सा. सुबर्थनिर्णयः, पृ. २०५।
५. परमलघुमञ्जूषा, कारकविचारः, पृ. १०४।

एवञ्चावधित्वमेव पञ्चम्यर्थ इत्यत्र प्राचीननव्ययोर्नास्ति कश्चन विवादः; किन्त्ववधित्व(ध्रुवत्व)स्वरूपे विवादो दृश्यते तत्तद्ग्रन्थेषु।

**कौण्डभट्टमतम्**

प्राचीनवैयाकरणाः कौण्डभट्टादयस्तु प्रकृतधात्वर्थप्रधानीभूतव्यापारानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वं ध्रुवत्वमिति स्वीकुर्वन्ति। तथा चोक्तं भर्तृहरिणाऽपि—

अपाये[१] यदुदासीनं चलं वा यदि वाचलम्।
ध्रुवमेवातदावेशात् तदपादानमुच्यते।।
पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते।।

तद्व्याख्यानं कुर्वता कौण्डभट्टेन भणितम्—'अपाये'[२] विश्लेषहेतुक्रियायामुदासीनमनाश्रयः, अतदावेशात् तत्क्रियानाश्रयत्वात्। एवञ्च विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वं फलितम्।

एवञ्चावधिभूतो ध्रुवो द्विविधो भवति, सक्रियः, निष्क्रियश्चेति प्रतिपादितम्, चलं वा यदि वाचलमित्युक्त्या। तत्र सक्रियोऽवधिः 'धावतोऽश्वात् पतति' इत्यत्राश्वे, निष्क्रियश्च ग्रामादायाति, वृक्षात् पत्राणि पतन्तीत्यादौ ग्रामादीनां बोध्यः।

ननु 'कुड्यात् पततोऽश्वात् पतति चैत्रः' इत्यत्राश्वस्यावधित्वं न स्यात्, विश्लेषहेतुपतनक्रियाश्रयत्वादिति चेदुच्यते—लक्षणे विश्लेषसामान्यं नापेक्ष्यतेऽपि तु तद्व्यक्तित्वेनैव। अर्थात् तद्विश्लेषहेतुक्रियानाश्रयत्वे सति, तद्विश्लेषाश्रयत्वमिति लक्षणं ध्रुवस्य। एवञ्च यन्निरूपितमवधित्वं चिकीर्षितं तत्क्रियानाश्रयत्वमपेक्ष्यते। तथा च 'पततोऽश्वात् पतति चैत्रः' अत्र चैत्रनिष्ठविश्लेषजनकपतनक्रियानिरूपितावधित्वमश्वे चिकीर्षितं, तत्क्रियानाश्रयत्वमश्वे विद्यत एव, तत् क्रियायाश्चैत्रादिनिष्ठत्वात्। एवमश्वनिष्ठा या पतनक्रिया, तन्निरूपिताऽवधित्वं कुड्ये, तस्मादश्वकुड्ययोरुभयोरपि ध्रुवत्वं निर्विवादमेव। एवञ्च कुड्यावधिकपतनाश्रयो योऽश्वस्तदवधिकं चैत्रनिष्ठं पतनमिति बोधः।

---

१. यद्यपीदं कारिकाद्वयमपि इदानीमुपलब्धे मुद्रितवाक्यपदीये न दृश्यते, किन्तु सर्वेष्वेव प्रायोऽपादानप्रतिपादकग्रन्थेषु प्रमाणत्वेनोपन्यस्तम्। अत एव वैयाकरणभूषणसारस्य सुबर्थनिर्णये कौण्डभट्टेनापि उपन्यस्तम्, पृ. २०५-२०६।

२. वै.भू.सा. सुबर्थनिर्णयः, पृ. २०६।

पञ्चम्यर्थेऽवधौ प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम्, प्रत्ययार्थस्तु पतनक्रियायां निरूपकत्वसम्बन्धेन विशेषणम्। अत्र प्रत्ययार्थोऽवधिरूपो धर्मी, न तु धर्ममात्रम्, ओदनकर्मकोद्धरणावधिभूतस्थालीत्यर्थकोद्धृतौदना स्थालीति वाक्ये सामानाधिकरण्यदर्शनात्। तथा चोक्तम्—'प्रत्यायार्थस्तु क्रियायां, स च धर्मी, न तु धर्ममात्रम्। विभक्त्यर्थे विहितस्य बहुव्रीहेर्धर्मिपरताया निर्विवादत्वात्' उद्धृतौदना स्थालीत्यत्र हि ओदनकर्मकोद्धरणावधिभूतेत्यर्थः।

नन्वेवमपि 'परस्परान्मेषावपसरतः' इत्यादौ यत्र विश्लेषणजनकक्रियाद्वयजन्यो मेषद्वयनिष्ठ एक एव विभागः, तत्र विश्लेषजनकक्रियाश्रयत्वादुभयोर्मेषयोरपादानत्वं न स्यादिति चेदुच्यते—एकस्मिन्नेव विभागे, तद्विभागजनकक्रिया व्यक्तिभेदाद् भिन्ना। एवञ्चैतन्मेषनिष्ठक्रियाया मेषान्तरेऽभावेनोभयोरपादानत्वं सम्भवति। एवञ्चैतन्मेषनिष्ठा या तद्व्यक्तिरूपा विश्लेषजनकक्रिया, मेषान्तरस्य तदनाश्रयत्वेऽपादानत्वं, स्वनिष्ठ-तत्क्रियाव्यक्त्याश्रयत्वेन च कर्तृत्वं सिद्ध्यति। उक्तञ्च भर्तृहरिणा—

मेषान्तरक्रियापेक्षमवधित्वं[१] पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक् पृथक्॥

कौण्डभट्टैरपि भणितम्—यथा[२] निश्चलमेषादपसरद् द्वितीयमेषस्थले निश्चलमेषस्यापसरन्मेषक्रियामादाय ध्रुवत्वम्, तथात्रापि विभागैक्येऽपि क्रियाभेदादेकक्रियामादाय परस्य ध्रुवत्वम्। तथा च विश्लेषाश्रयत्वे सति तत्क्रियायामपादानत्वं तज्जनकं वाच्यम्।

'परस्परान्मेषावपसरतः' इत्यत्रापादानत्वसिद्धय इयमेव युक्तिराश्रिता भट्टोजिदीक्षितेनापि। तथा चोक्तम्—'परस्परान्[३] मेषावपसरतः' इत्यत्र तु सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठां गतिं प्रतीतरस्यापादानत्वं न विरुध्येत्।

वस्तुतस्तु—अपसरणं विभागपूर्वकपृष्ठतो गमनम्। तस्य मेषद्वयनिष्ठत्वादाश्रयभेदेन भिन्नत्वेऽपि सृधातुना निवृत्तभेदस्यैवापसरणस्य प्रतीतिः। तथा चोक्तं कैयटेन 'आख्यातवाच्या[४] क्रिया सर्वैव निवृत्तभेदा प्रतीयते। भवद्भिरास्यतम्' इत्यादौ वस्तुस्थित्या कर्तृभेदाद् भेदेऽपि तिङन्ताद्

---

१. प्रौढमनोरमा (कारके, पञ्चमीप्रकरणम्), पृ. ९२१।
२. वाक्यपदीयम्, तृतीयकाण्डः, साधनसमुद्देशः, कारिका-१४१।
३. वै.भू.सा., सुबर्थनिर्णयः, पृ. २०८।
४. प्रौढमनोरमा, पृ. ११९।

भेदस्यानवगमात्। एवञ्चाश्रयगतभेदारोपेण द्विवचनाद्युत्पत्तेरुभयोरपि तत्क्रिया श्रयत्वेन कर्तृत्वमेव स्यान्नापादानत्वम्। अत एवोक्तं भाष्ये—'न तिङन्तान्येकशेषारम्भं[१] प्रयोजयन्ति, किं कारणम्? एका हि क्रिया' इति। तस्मात् क्रियाभेदमादाय कर्तृत्वापादानत्वप्रतिपादनपरं भर्तृहरि-कौण्डभट्ट-भट्टोजिदीक्षितानां मतमसमीचीनमेव, भाष्यविरुद्धत्वात्। अतः 'न सोऽस्ति[२] प्रत्ययो लोके यः शब्दानुगमादृते' इति हर्युक्त्या शब्दालिङ्गितस्यैवार्थस्य सर्वज्ञानविषयताया वैयाकरणसम्मतत्वात्, तादृशशब्दभेदादेवात्र कर्तृत्वमपादानत्वञ्चोपपादनीयम्। एवञ्च मेषपदोपात्तयोरेव क्रियाश्रयत्वात्कर्तृत्वं, परस्परपदोपात्तयो-र्विभागाश्रयत्वादपादानत्वं भविष्यति। अत एव देवदत्तयज्ञदत्तावन्योन्यमाश्लिष्यत इत्यत्र देवदत्तयज्ञदत्तयोः कर्मत्वं सिद्ध्यति, अन्यथा तु तत्रापि परत्वात् कर्तृसंज्ञैव स्यात्। शब्दरूपोपाधिकृतभेदमादायैव, चैत्रः आत्मानं हन्तीत्यादावेकस्यैव कर्तृत्वकर्मत्वोपपत्तिः।

एवञ्च 'परस्परान्मेषावपसरतः' इत्यत्रापि शब्दरूपोपाधिकृतभेदमादायैव कर्तृत्वापादनत्वोपपत्तिः युक्ता। प्रतिपादितञ्चैतत् नागेशेनापि—'किञ्च[२] मेषपदवाच्ययोः पशुविशेषयोः क्रियाश्रयत्वविवक्षा, परस्परपदवाच्ययोस्तयोस्तु विभागाश्रयत्वविवक्षेत्यौपाधिकस्तयोर्भेदः। शब्दस्वरूपोपाधिकृतभेदोऽप्यर्थे गृह्यते। यथाऽऽत्मानमात्मना वेत्तीत्यादौ शरीरावच्छिन्नं कर्तृ, अन्तःकरणावच्छिन्नं करणं, निरवच्छिन्नं निरीहं कर्म, एकस्यैव शब्दभेदाद् भेदः, शब्दालिङ्गितस्यैव सर्वत्र भानात्।

## नागेशमतम्

नागेशास्तु कौण्डाभिमते विश्लेषहेतुक्रियानाश्रयत्वे सति, विश्लेषाश्रयत्वरूपेऽपादानत्वे भाष्यविरोधमुपवर्णयन्ति। तथा हि—धावतः पतित इत्यादौ ध्रुवत्वाभावादपादानत्वं न स्यादित्याशङ्कितं भाष्ये।[३] इत्थमाशङ्क्य च 'न वाऽध्रौव्यस्याविवक्षितत्वादित्येव।[४] कथं पुनः सतो नामाविवक्षा स्यात्? सतोऽप्यविवक्षा भवतीति' समाहितं तत्रैव भाष्ये। एवञ्चात्राश्वे विश्लेषहेतुमद्धात्वर्थ-

१. महाभाष्यप्रदीपः, १/२/६४, पृ. ८२।
२. वाक्यपदीयम्, काण्डः १, कारिका-१२४।
३. परमलघुमञ्जूषा, कारकविचारः, पृ. १०२।
४. ये त्वेतेऽत्यन्तगतियुक्तास्तत्र कथं धावतः पतितस्त्वरमाणात्पतित इति। (म.भा. १/३/२४, पृ. २४९)

क्रियानाश्रयत्वेनाध्रुवत्वस्यासत्त्वाद् 'अध्रौव्यस्याविवक्षा स्यात्, सतोऽप्यविवक्षा भवति' इति भाष्याद् विरोधः स्पष्ट एव कौण्डभट्टमते। तस्माद् गतिविशेषे सति यद् ध्रुवमवधित्वेन विवक्षितत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयं तदपादानमिति ध्रुवमपायेऽपादानमिति सूत्रस्यार्थं वर्णयन्ति। तथा चोक्तम्—यस्मादपाये[1] गतिविशेषे सति यद्ध्रुवमवधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयं तदपादानमिति सूत्रार्थः। एवञ्चास्मिन् मते न भाष्यविरोधः। त्रस्तात् पततः, धावतः पतित इत्यादौ त्रासादीनामवधित्वोपयोगित्वमस्तीति स्वीकृत्य प्रश्नः, उत्तरस्य तु न तेषामवधित्वोपयोगित्वमित्याशयात्। तथा चोक्तम् उद्द्योते—त्रासादीनामवधित्वोपयोगितां मन्यमानस्य प्रश्नः, उत्तराशयस्तु न तदवधित्वोपयोगि, अश्वात् पततः, वृक्षात् पतित इत्यादावभावात्।

कौण्डभट्टाभिमतेऽपादानत्वे भाष्यविरोधमुपपाद्येदृशं व्याख्यानं कुर्वता नागेशेन परमलघुमञ्जूषायामित्थमपादानत्वस्य स्वरूपं प्रत्यपादि—'तत्तत्कर्तृसमवेत[2]-तत्तत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वमपादानत्वं, तदेवावधित्वम्' इति।

अत्रेदं विचारणीयम्—एतादृशापादानत्वस्वीकार उक्तभाष्यविरोधोऽस्ति न वेति? तत्र भाष्यविरोध एव प्रतीयते। धावतः पततः चैत्र इत्यादौ चैत्रसमवेतपतधात्वर्थक्रियाजन्यप्रकृतधात्ववाच्यविभागस्य धावत्यश्वेऽपि विद्यमानत्वेन ध्रुवत्वाभावादपादानत्वाभाव इति शङ्कापरं भाष्यं, तत्समाधानपरञ्च भाष्यं विरुध्यत एव। तादृशावधित्वं गतिमत्यश्वे स्वयमेव स्वीकृतं नागेशेनैव। तथा हि पर्वतात्पततोऽश्वात्[3] पतत्यश्ववाह इत्यादावश्वस्यापादानत्वाय तत्स्वीकारात्[4]। एवञ्च नागेशस्यैव लघुशब्देन्दुशेखरे भिन्नं, परमलघुमञ्जूषायाञ्च भिन्नमेव मतं दृश्यते।

अन्योऽपि विरोधो दृश्यते द्वयोर्ग्रन्थयोः प्रतिपादिते सिद्धान्ते। तथा हि—प्रकृतधात्वर्थविभागाश्रयत्वापादानत्वशक्तेश्च सामानाधिकरण्यादपादानसमभिव्याहारे विभागोऽपि धात्वर्थः प्रतिपादितो लघुशब्देन्दुशेखरे। एवञ्च वृक्षाद् भूमिं पततीत्यादौ वृक्षापादानकविभागपूर्वकभूमिनिष्ठसंयोगानुकूलो व्यापार इति बोधो भवति। तथा चोक्तम्—'अपादानत्वशक्तिश्च[5] प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेत्यपादानसमभिव्याहारे विभागोऽपि धात्वर्थ इति बोद्धव्यम्' इति।

१. महाभाष्योद्द्योतः, १/४/२४, पृ. २४८।
२. परमलघुमञ्जूषा, कारकविचारः, पृ. १०२।
३. परमलघुमञ्जूषा, कारकविचारः, पृ. ९, १०३।
४. ल.श.शे., कारकप्रकरणम्, पृ. ४०७।
५. महाभाष्योद्द्योतः, १।४।२४, पृ. २४७।

अत्रेदं विचारणीयम्—यदि विभागस्यापि धात्वर्थत्वं स्वीक्रियते, तदा परमलघुमञ्जूषायां प्रतिपादितमपादानत्वं वृक्षात् पर्णं पततीत्यादौ वृक्षस्य न स्यात्, तस्य प्रकृतधातुवाच्यविभागाश्रयत्वात्। यथा वृक्षं त्यजतीत्यत्र प्रकृतधातुवाच्यविभागाश्रयत्वाद् वृक्षस्यापादानसंज्ञा न भवति, तद्वत्।

एवञ्चात्र विविधेषु ग्रन्थेषु प्राच्यनव्यैः प्रतिपादितानां सिद्धान्तानां समालोचने विश्लेषजनकक्रियायामवधित्वेन विवक्षितत्वे सति तदन्यस्यावधित्वोपयोगिव्यापारस्यानाश्रयत्वमेव ध्रुवत्वं ध्रुवमपायेऽपादानमिति सूत्रे सिद्धान्तभूतमिति मे मतिः।

अपायस्त्वत्र विभागजसंयोगानुकूलोऽवधिसाकाङ्क्षो गतिविशेष इति प्रतिपादितमुद्द्योते[1]। एवञ्च यदा गताववधेरुल्लेखो भविष्यति, तदैव तत्रापायो स्वीक्रियते, नान्यथा। तथा चोक्तं कैयटेन—सति ह्यवधौ[2] गतिरपायो भवति, नान्यथा, गतिविशेषत्वादपायस्य इति। तस्मात् पर्णस्य पतनक्रियायां यदि वृक्षस्यावधित्वेन विवक्षा भवति, तदैव तस्यापादानसंज्ञा वृक्षात् पर्णं पततीत्यत्र। यदा तु वृक्षस्यावधित्वं न विवक्ष्यते, तत्र पर्णसम्बन्धविवक्षायां वृक्षस्य पर्णं पततीत्यत्र सम्बन्धसामान्ये षष्ठ्येव। प्रतिपादितञ्चैतद् भर्तृहरिणा—

गतिर्विना त्ववधिना[3] नापाय इति गम्यते।
वृक्षस्य पर्णं पततीत्येव भाष्ये निदर्शितम्।।

अपायस्याविवक्षितत्वात्। नात्रापायो विवक्षितः। किं तर्हि? सम्बन्ध इति।

माधवाचार्येणाप्युक्तम्—वृक्षस्य पर्णं पततीत्यत्र तु सन्नप्यपायो न विवक्षित इति षष्ठी।

एवञ्चावधौ सत्यामेवापायो भविष्यति[4], न तु विश्लेषक्रियाकथनमात्रेण। तत्र यद्यप्यपायेन सह ध्रुवत्वेनावश्यमेव भाव्यम्, तथापि ध्रुवपदार्थस्यावश्यमेव कृतोल्लेखोऽपादानसंज्ञायां प्रयोजकः। अत एव 'ध्रुवमपायेऽपादानम्'[5] इति सूत्रे पाणिनिनोभयोर्निर्देशः कृतः, अन्यथा त्वपायनिर्देशेनैव ध्रुवस्य प्रतीतौ तन्निर्देशोऽसङ्गत एव स्यात्।

---

१. महाभाष्यप्रदीपः, १।४।२३, पृ. २४१।
२. वाक्यपदीयम्, तृतीयकाण्डे साधनसमुद्देशः, कारिका-१४३।
३. महाभाष्यम्-१।४।२३, पृ. २४१।
४. माधवविवरणटीका (सारस्वतम्), पृ. १५४।
५. पा.सू. १।४।२४।

अपादानं चेदं न केवलं वास्तविकमपि तु बुद्धिकृतकाल्पनिकमपि भवति। यथा वृक्षात् पर्णं पततीत्यत्र वास्तविकमपादानं, तथैवाधर्माद् विरमतीत्यत्र बुद्धिकृतकाल्पनिकम्। बौद्धापादानं स्वीकृत्यैव 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति वार्तिकं प्रत्याख्यातं भाष्ये। तथा हि अपादानसंज्ञाप्रतिपादके सूत्रे भाष्ये जुगुप्सेति वार्तिकस्य प्रयोजनमभिधायोक्तम्, तत्तर्हीदं बहु वक्तव्यम्? न वक्तव्यम्। इह तावद् अधर्माज्जुगुप्सते, अधर्माद् वीभत्सते इति। य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति, दुःखोऽधर्मो नानेन कृत्यमस्तीति। स बुद्ध्या सम्प्राप्य निवर्तते। तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम्। इह धर्माद् विरमति, धर्मान्निवर्तत इति। धर्मात् प्रमाद्यति, धर्मान्मुह्यतीति। इह य एष मनुष्यः सम्भिन्नबुद्धिर्भवति स पश्यति नेदं किञ्चिद् धर्मो नाम, नैनं करिष्यामीति स बुद्ध्या सम्प्राप्य निवर्तते। तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम्।[1] अयम्भावः—अधर्माद् विरमति, अधर्माज्जुगुप्सते इत्यादौ विरामादिक्रियां प्रत्यधर्मस्यापि ध्रुवत्वेनापादानसंज्ञा। तत्तु बौद्धमेव, न तु वास्तविकम्। प्रेक्षापूर्वकारी मनुष्योऽधर्मः कष्टदायक इति कृत्वाऽधर्मान्निवर्तते। अतस्तत्रापि मनुष्यस्य बुद्धिकृतो विश्लेषो भवत्येव। अतस्तस्यापि युज्यतेऽपादानत्वम्। तथा चोक्तं कैयटेन—'स्वरितेनाधिकारः, इत्यधिकः कारोऽधिकार इत्यस्यार्थस्याश्रयणेन च बुद्धिव्यवस्थितापायाश्रयापादानं संज्ञा प्रवर्तते'[2]।

बुद्धिपरिकल्पितापायस्य सत्ता माधवाचार्येणापि स्वीकृताऽस्ति। तथा चोक्तं तेन—'चौराद्बिभेति[3], भीत्या निवर्तते, चौरात् त्रायते चौरकृताद् वधादेस्त्राणेन निवर्तयतीति भयादिपूर्विकायां निवृत्तौ भयादीनां प्रवृत्तौ सर्वत्रात्र बुद्धिपरिकल्पितो विश्लेषोऽस्तीति विश्लेषावधावेव पञ्चमी सिद्धेति न तदर्थं यत्नान्तरं कृतं सूत्रकृता। एवं पापात् पराजयते इत्यादावपि पराजेर्न्यूनाभावे पूर्वनिवृत्तौ वृत्तिर्विश्लेषो बोद्धयः।

एवमेव बुद्धिपरिकल्पितापायं स्वीकृत्य 'ल्यब्लोपे कर्मण्यधिकरणे च' इति वार्तिकस्यापि खण्डनं कृतं भाष्यकृता। तत्र ल्यब्लोप इति वार्तिकस्य प्रयोजनमुक्त्वा समाहितम्—'न वक्तव्यम्[4]। अपादाने इत्येव सिद्धम्। इह तावत्प्रासादात्प्रेक्षते, शयनात्प्रेक्षते इति, अपक्रामति तत्तस्यादर्शनम्। यद्यपक्रामति किं नात्यन्तायापक्रामति? सन्तत्वात्। अथवान्यान्यप्रादुर्भावात्। अन्या चान्या च प्रादुर्भवतीति।

---

१. महाभाष्यम्-१।४।२४, पृ. २४८।
२. महाभाष्यप्रदीपः-१।४।२४, पृ. २४८।
३. माधवविवरणटीका, पृ. १५४।
४. महाभाष्यम्-२।३।२८, पृ. ५०५।

अयम्भावः—प्रेक्षणक्रियायामपि दर्शनक्रियास्थानात् स्थानान्तरं गच्छति। अतोऽपायस्तत्र सुतरां सिद्ध्यति। तस्यापायस्य च प्रासादादीनामवधित्वविवक्षणाद् ध्रुवमपायेऽपादानमिति सूत्रेणैवापादानसंज्ञा सिद्धा, तदर्थं वार्तिकं न कर्तव्यमिति भाष्याशयः। एवञ्च बौद्धापादानं स्वीकृत्य भाष्ये वार्तिकाणां प्रत्याख्यानदर्शनात् तदवश्यमेव स्वीकार्यम्।

अत एव नागेशेनापि तस्य सत्ता प्रतिपादिताऽस्ति। तथा चोक्तम्—[1]'विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव, किन्तु बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिपरिकल्पितोऽपि। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इत्यादौ बुद्धिपरिकल्पितापायाश्रयणेनैव भाष्ये पञ्चमीसाधनात्। एवञ्च बौद्धमिदमपादानं सर्वैरिव स्वीकृतम्।

कौण्डभट्टैरपि 'रूपं रसात् पृथक्' इत्यत्रापादानत्वं बौद्धमेव स्वीकृतम्। अभिहितञ्च तैः—रूपं रसाद्[2] इत्यत्र तु बुद्धिपरिकल्पितमपादानत्वं द्रष्टव्यम्, पृथग्विनेति पञ्चमी वा। यद्यपि पृथग्विनेति पक्षान्तरोपन्यासेन बुद्धिपरिकल्पने गौरवमिति तेषामाशयो वर्णितः प्रभाकृता तत्रैव, किन्तु तन्न युक्तम्, बौद्धापादानस्य भाष्यसम्मतत्वात्। तत्र गौरवमिति नाशयो कौण्डभट्टस्यापि तु पक्षान्तरोपन्यासः, उपायस्योपायान्तरादूषकत्वादिति बुद्ध्यैवेति मे मतिः।

**मीमांसकमतम्**

मीमांसकास्त्वपादानत्वमखण्डोपाधिरूपमेव स्वीकुर्वन्ति। तत्रैव च पञ्चम्या शक्तिं वर्णयन्ति; किन्तु अवधित्वस्य पञ्चम्यर्थत्वेऽपि न तेषां कश्चन विरोधः। अत एव भाट्टतन्त्ररहस्ये पञ्चम्यर्थनिरूपणप्रसङ्गे विभागः, परसमवेतत्वञ्च पञ्चम्याः शक्यमिति मतान्तरमुपन्यस्य मीमांसकसिद्धान्तं वर्णयन् खण्डदेव आह—[3]वस्तुतस्तु गुरुभूतशक्यतावच्छेदकभेदेनानेकशक्तिकल्पनापेक्षया प्रकृत्यर्थस्य पञ्चम्यर्थद्वयान्वये व्युत्पत्तिद्वयम्, पञ्चम्यर्थस्य च धात्वर्थद्वयान्वयव्युत्पत्तिद्वयमिति कल्पनापेक्षया चानुगतव्यवहारसाक्षिकतयाऽपादानत्वमखण्डोपाधिरूपमेकं धर्मं निरुक्तापादानत्वसमव्यापकं कल्पयित्वा, तत्रैव पञ्चम्याः शक्तिं कल्पयित्वा तस्मिंश्च प्रकृत्यर्थान्वयायैकाम्, तस्य चाख्यातार्थान्वयायैकां व्युत्पत्तिं कल्पयितुमुचितमिति।

---

१. परमलघुमञ्जूषा, कारकविचारः, पृ. १०२।

२. वै.भू.सा., सुबर्थनिर्णयः, पृ. २११-२१२।

३. भाट्टतन्त्ररहस्यम्, पृ. १२९।

अग्रे चावधित्वस्य पञ्चम्यर्थे स्वविरोधाभावं प्रकटयतोक्तं खण्डदेवेन सर्वेष्वपि पूर्वोक्तेषु अवधित्वमेव पञ्चम्यर्थः। तस्य च क्वचिद् धात्वर्थजन्य-विभागद्वारकोऽन्वयः, क्वचिद् धात्वर्थद्वारक इत्यपि वा सुवचम्।

एवञ्चावधित्वमेव पञ्चम्यर्थः। तत्तु अपाये सत्येव। अपायस्तु वास्तविकः, बुद्धिपरिकल्पितश्चेति सिद्धान्तः।

**अपादानभेदः**

अपादानस्य द्वौ भेदौ, सक्रियं निष्क्रियञ्चेति पूर्वमेव प्रतिपादितम्, 'चलं वा यदि वाचलम्' इति हर्युक्तेः। कारकोल्लासेऽपि भेदाविमौ सोदाहरणं वर्णितौ। तथा हि—

पर्वतादवतीर्णोऽसौ धावतोऽश्वात् पतत्यसौ।

कौण्डभट्टैस्तु अपादानस्य त्रैविध्यं स्वीकृतम्—निर्दिष्टविषयम्, उपात्तविषयम्, अपेक्षितक्रियञ्चेति।

**निर्दिष्टविषयम्**—यत्र निरूपकोऽर्थः साक्षाद् धातुना निर्दिश्यते, तत् निर्दिष्टविषयमपादानम्। यथा अश्वात् पतति। अत्राऽपादानत्वस्य निरूपिका विभाजनकपतनक्रिया साक्षात् पतति इत्यनेन निर्दिश्यते, अत इदं निर्दिष्टविषयम्।

**उपात्तविषयम्**—यत्र धातुना धात्वन्तरार्थगर्भितोऽर्थ उपस्थाप्यते, तत्रोपात्तविषयमपादानम्। यथा—वलाहकाद् विद्योतते। अत्र निस्सरणाङ्गं विद्योतनं द्युतिधात्वर्थः।

**अपेक्षितक्रियम्**—यत्र धातोरप्रयुक्तत्वेन कारकत्वप्रयोजिका गमनादि-क्रियाऽपेक्ष्यते तदपेक्षितक्रियमपादानम्। यथा कुतो भवान्, पाटलिपुत्रात्। अत्र उभयोर्वाक्ययोरागमनादिक्रियाऽध्याहृत्यैवान्वेति, न तु धातोः प्रतीयते। एवञ्चैतत् सर्वं प्रतिपादयता कौण्डभट्टेनाऽपि भणितम्—यत्र साक्षाद् धातुना गतिर्निर्दिश्यते, तन्निर्दिष्टविषयम्। यथा—अश्वात् पतति। यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह, तदुपात्तविषयम्। यथा—बलाहकाद् विद्योतते। अत्र निःसरणाङ्गे विद्योतने

---

१. भाट्टतन्त्ररहस्ये, पृ. १३०।
२. कारकोल्लासः, श्लो. ७६।
३. वै.भू.सा. सुबर्थनिर्णयः, पृ. २१२।
४. वाक्यपदीयम्, तृतीयकाण्डः, साधनसमुद्देशः, कारिका-१३६।

द्युतिर्वर्तते। अपेक्षिता क्रिया यत्र तदन्त्यम्। यथा—कुतो भवान्, पाटलिपुत्रात्। अत्रागमनमर्थमध्याहृत्यान्वयः कार्यः। भेदत्रयमिदं भर्तृहरिणाऽपि स्वीकृतम् —

निर्दिष्टविषयं किञ्चिद् उपात्तविषयं तथा।
अपेक्षितक्रियञ्चेति त्रिधापादानमुच्यते'।।

भेदत्रयेऽस्मिन् स्वाभिमतं मतं प्रकटयता दण्डनाथेनाऽपि स्पष्टतरं सोदाहरणं व्याख्यातं भेदत्रयमिदम्। तथा चोक्तम्—यत्र धातुनाऽपायलक्षणो विषयो निर्दिष्टस्तत् निर्दिष्टविषयम्, यथा—पर्वतादवरोहति। यत्र तु धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह तदुपात्तविषयम्, यथा—कुसूलात् पचति। अत्राऽऽदानाङ्गे पाके पचिर्वर्तते। यत्र क्रियावाचि पदं न श्रूयते, केवलं प्रतीयते, तदपेक्षितक्रियम्, यथा—सांकाश्यकेभ्यः पाटलिपुत्रका अभिन्नरूपतरा इति।

एवञ्चापादानभेदविषये तद्भेदस्वरूपविषये च प्रायो मतैक्यमेवाचार्याणाम्।

**सम्प्रदानापादानयोः कारकत्वाकारकत्वविचारः**

सम्प्रदानापादानयोरकारकत्ववादिन इत्थमुद्घोषयन्ति यत् सम्प्रदानापादानयोः कृधातुघटितत्वाभावात् कारकत्वं नास्ति। यथा कर्तृकर्म-करणाधिकरणानि कृधातुघटितानि, तथा नेमाविति हेतोस्तयोर्न कारकत्वम्। तथा चोक्तं रामाज्ञापाण्डेयैः—'अपि च यथा कर्तृकर्मकरणाधिकरणेषु कृधातुरनुस्यूतोऽस्ति, नहि तथा सम्प्रदानापादानशब्दयोः। एतेनापि न तयोः कारकत्वं युक्तियुक्तम्'[२] इति।

अपि च यथा कर्मकरणाधिकरणानां स्वस्वव्यापारे स्वातन्त्र्यविवक्षया कर्तृत्वं भवति, ओदनः पच्यते, असिः छिनत्ति, स्थाली पचति इत्यादौ, न तथा सम्प्रदानापादानयोः। वस्तुतः सर्वेषां कारकाणां येन केनापि रूपेण स्व-स्वव्यापारे स्वातन्त्र्यविवक्षायां कर्तृत्वं भवति, किन्तु सम्प्रदानापादानयोर्न कदापि स्वातन्त्र्यविवक्षा लोके दृश्यते। अतो रामाय ददाति इत्यत्र रामो ददाति इति न प्रयोगः, न वा वृक्षः पतति इति प्रयोगः। सम्प्रदानापादानयोः स्वातन्त्र्येण विवक्षाभावो हेलाराजेनाऽपि प्रतिपादितः[३]। तथा चोक्तम्—सम्प्रदानापादानयोः स्वस्वव्यापारे स्वातन्त्र्यविवक्षा नास्ति, द्वितीयस्य दातुरपगन्तुश्चापेक्षणात्[४]।

---

१. सरस्वतीकण्ठाभरणवृत्तिः, १।१।६५।
२. व्याकरणदर्शनभूमिका, पृ. २०९।
३. हेलाराजटीका (वाक्यपदीयम्), साधनसमुद्देशः, कारि. १८।
४. व्याकरणदर्शनभूमिका, पृ. २०८।

अतः स्वस्वव्यापारे स्वातन्त्र्येण विवक्षाभावान्न तयोः कारकत्वमिति प्रतिपादितम्। तथा हि—'यत् कारकं भवति, तदवश्यमेव कर्ता भवेत्। यथा कर्मकरणाधिकरणानि अविवक्षया ओदनः स्वयमेव पच्यते, असिः च्छिनत्ति, स्थाली पचतीत्यादौ कर्तृत्वं भजन्ते, नैव सम्प्रदानापादाने क्वचिदपि अविवक्षया रामो ददाति, पर्वतः पततीत्यादिरूपेण कर्तृत्वमासादयत इति। एवञ्च सम्प्रदानापादानयोः कारकत्वं न सम्भवतीति महता समारम्भेण खण्डितं तयोः कारकत्वं रामाज्ञापाण्डेयमहोदयैः।

अत्रोच्यतेऽस्माभिः—रामाज्ञापाण्डेयमहोदयैः सम्प्रदानापादानयोः कारकत्वाभावाय या युक्तयः प्रदर्शितास्ताः सर्वा अविचारितरमणीया एव प्रतिभान्ति। यतो हि न हि कृधातुघटितत्वं कारकत्वं, न वा कदाचित् स्वातन्त्र्येण विवक्षितत्वं वा कारकत्वं कैश्चिदपि स्वीकृतं व्याकरणनिकाये, दर्शनान्तरेषु वा। अपि तु क्रियान्वयित्वं, क्रियाजनकत्वं चेति पक्षद्वयमेवोपलभ्यते कारकत्वस्वरूपविषये, इति नाविदितं विदितवेदितव्यानाम्। तत्र करोतीति कारकम् इति भाष्यानुरोधात् क्रियाजनकत्वमेव कारकत्वमिति नव्यवैयाकरणानां सम्मतिः।

एवञ्च सम्प्रदानापादानयोः क्रियाजनकत्वं सर्वैरिव स्वीकृतम्। तथा चोक्तं नागेशेन—'सम्प्रदानादीनामपि स्वज्ञानद्वारा जनकत्वं बोध्यम्'। एवञ्च कैयटेनापि सम्प्रदानापादानयोः कारकत्वं स्वीकृतम्—'वस्तुतस्त्वपादानस्यावधित्वभावेनावस्थानं व्यापारोऽस्ति, सम्प्रदानस्यापि अनुमननादिलक्षणं प्रतीयमानोऽपि व्यापारः कारकव्यपदेशनिबन्धनम्। यथा प्रविश पिण्डीमिति'[१]।

किञ्च सम्प्रदानापादानसंज्ञाविधायके सूत्रद्वयेऽपि कारके इत्यधिकारात् कारकमिति सम्बध्यते। अतो दानक्रिया कर्मणाऽभीप्सितं कारकसंज्ञं सम्प्रदानसंज्ञं च भवति, एवमेव विश्लेषहेतुक्रियायां ध्रुवत्वेन विवक्षितं यत्, तत् कारकसंज्ञमपादानसंज्ञं च भवतीति सम्प्रदानापादानसंज्ञाविधायकस्य सूत्रद्वयस्य सर्वसम्मतार्थत्वाद् यत् सम्प्रदानमपादानञ्च भवति, तत् कारकमवश्यमेव भवति।

अत एवैकसंज्ञाधिकाराद् एकस्मिन् कारकापादानसंज्ञयोः समावेशो न भवतीत्याशङ्क्य योगविभागेन समाहितं कैयटेन। तथा चोक्तम्—'नैष दोषः'[२]। ध्रुवमपाय इति योगविभागेन कारकसंज्ञा क्रियते, ततोऽपादानमित्यत्र

---

१. महाभाष्यप्रदीपः, १।४।२३, पृ. २४४।

२. महाभाष्यप्रदीपः, १।४।२३, पृ. २४०।

कारकग्रहणमनुवर्तते ध्रुवमपाय इति च, तेन कारकं सदपादानसंज्ञकमित्येवं समावेशः सिद्ध्यति। एवञ्चानेन कैयटव्याख्यानेन सम्प्रदानापादानत्वं कारकत्वव्याप्यमेव। अतस्तयोः कारकत्वाभाववादिनां मतं भाष्यासम्मतत्वाद् उपेक्ष्यमेवेति मे मतिः।

अत्रेत्थमाशङ्क्यते यद् यदि सम्प्रदानादीनां कारकत्वं सम्भवति, तर्हि सम्बन्धस्यापि कारकत्वं स्यादिति कैश्चित्, तस्य समाधानं कुर्वता जगदीशतर्कालङ्कारेणोक्तम्—'षष्ठ्यर्थस्तु सम्बन्धो न धात्वर्थे प्रकारीभूय भासते, तण्डुलस्य पचतीत्याद्यप्रयोगात्, अतः सम्बन्धो न कारकम्'[१] इति।

षष्ठ्या कारकत्वाभावो नागेशेनापि प्रतिपादितः। ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वं, पुत्रेणान्यथासिद्ध्या तत्त्वाभावात्[२]। तस्मात् षष्ठ्या कारकत्वाभाव एव सर्वसम्मत इति।



---

१. शब्दशक्तिप्रकाशिका, श्लोकः ६७।

२. ल.श.शे. कारकप्रकरणम्, पृ. ४३४।

# क्रियाविशेषणविमर्शः

**डॉ. हरिवंशकुमारपाण्डेयः**
ईक्ष्यशोधकः, प्रकाशन-संस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी



अथेयं प्रस्तूयते क्रियाविशेषणवाचकपदविषये विचारणा काचन साम्प्रतम्। सर्वत्र हि शास्त्रेषु क्रियाविशेषणवाचकपदानां द्वितीयान्तत्वं क्लीबत्वञ्च परिदृश्येते। त इमे क्रियाविशेषणवाचकपदानां द्वितीयान्तताक्लीबते केन व्याकरणानुशासनेन कथं वा सम्पद्येते? केन वा सम्बन्धेन क्रियाविशेषणस्य क्रियायामन्वयश्चेत्यादि-विषयाणां विविदिषा प्रायो भूयसामेव विपश्चित्प्रवराणां मनांसि समाकुलीकरोतीति तद्विषयिणी काचिन्मीमांसा मन्ये न निष्प्रयोजनतां समालम्बेत। क्रियाविशेषण-वाचकपदानां क्लीबत्वे क्रियाविशेषणस्याभेदसम्बन्धेन क्रियायामन्वये च यद्यपि नास्ति तादृशं मतविभिन्नत्वं मिथः शास्त्रकाराणां तथापि द्वितीयान्तत्वविषये तेषां परस्परं विवदन्ते भृशं ग्रन्थकृतः।

तथा हि क्रियाविशेषणवाचकपदे कर्मण्येव द्वितीया भवतीति कैश्चन प्रतिपाद्यते, मुख्यकर्मत्वस्य तत्राभावेऽपि आतिदेशिकस्य तस्य तत्र स्वीकारे बाधाभावात्। तथा च 'कर्मणि द्वितीया'[१] इत्यनेन सूत्रेण तत्र द्वितीयाप्राप्तौ न किञ्चनापि समुदेति प्रतिबन्धकमिति। अपरैस्तु समभिधीयते यदत्र या द्वितीया-विभक्तिर्न सा कारकविभक्तिः, किन्तूपपदविभक्तिरेव। आतिदेशिककर्मत्वस्य स्वीकारापेक्षया आतिदेशिक्या द्वितीयाया एव तत्र स्वीकारे लाघवादिति। अन्यैः पुनरत्र द्वितीयान्तत्वमेव नाङ्गीक्रियते, किन्तु **'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा'**[२] इत्यनेन प्रथमान्ततैव युक्तेति प्रणिगद्यते।

परे पुनरत्र प्रतिपादयन्ति यत् क्रियाविशेषणानां मुख्यमेव कर्मत्वम्, न त्वातिदेशिकम्, ततश्च मुख्य एव कर्मणि तत्र तण्डुलं पचतीतिवत् **'कर्मणि**

१. पा.सू. २।३।२;　　　　२. तदेव–२।३।४६।

**द्वितीया'** इति पाणिनीयानुशासनेन द्वितीयेति। एतेषु चतुर्षु मतेषु प्रथमं मतं परिपुष्णन्ति व्युत्पत्तिवादप्रणेतारो नव्यनैय्यायिकमूर्द्धन्यमणयो गदाधर-भट्टाचार्यास्तदनुयायिनश्च। द्वितीयं सिद्धान्तं समर्थयन्ते शब्दशक्तिप्रकाशिकाकार-जगदीशतर्कालङ्कारप्रमुखा नैय्यायिकशिरोमणयो नव्यमीमांसकधुरन्धरा भाट्टरहस्यादि-प्रणेतृखण्डदेवादयश्च। तृतीयो राद्धान्तस्तु वरीवृत्यते नवीनशाब्दिकचक्रचूडामणेः श्रीनागेशभट्टस्य। चतुर्थञ्च मतं विराजते महाभाष्यकारादीनां सर्वेषां वैय्याकरण-तल्लजानाम्। एषु च मतेषु कतमन्मतं युक्ततममिति विधीयमानायां विवेचनायां महाभाष्यकारादीनां वैय्याकरणानामेव मतं लाघवात् सर्वश्रेष्ठमिति सुनिर्भरं वक्तुं शक्यते। पदविषये च पदशास्त्रपारावारपारीणानामेव दर्शनस्य युज्येत ग्राह्यत्वं न वाक्यविदां मीमांसकानां न वा प्रमाणज्ञानां नैय्यायिकानामिति निबन्धेऽस्मिन् पूर्वं नैय्यायिकमीमांसकादीनां मतानि यथाशास्त्रं पूर्वपक्षरूपेणोपदर्श्य शाब्दिक-शिरोमणीनामेव मतस्य परमरमणीयता प्रतिपादयिष्यतेऽस्माभिः।

तत्र तावदियं पुरः प्रस्फुरति विप्रतिपत्तिः—'ननु मृदुमोदनं पचति, स्तोकमोदनं पचतीत्यादौ, अथवा कटोऽपि कर्म, भीष्मादयोऽपि, तत्र कर्मणीत्येव सिद्धम्, अथवा कट एव कर्म तत्सामानाधिकरण्याद् भीष्मादिभ्यो द्वितीया भविष्यती'त्यनभिहितसूत्रस्थभाष्यरीत्या कर्मकारकविशेषणमृदुस्तोकादिभ्यो द्वितीयोपपत्तावपि मृदु पचति स्तोकं पचतीत्यादिक्रियाविशेषणस्थले मृदुस्तोकादीनां क्रियाविशेषणत्वेन क्रियायामभेदसम्बन्धेन अन्वयस्य स्वीकारेऽपि तद्वाचकपदेभ्यो द्वितीयोत्पत्तौ प्रमाणविरहः, तादृशार्थप्रतिपादकस्य सूत्रस्य क्वाप्यनुपलम्भात्। न च तत्र साधुत्वार्थमेव द्वितीयोररीकरणीयेति वाच्यम्, चतुर्थ्यादीनामपि तत्रातिप्रसङ्गात्, प्रथमाया अतिक्रमणे हेतुविरहेण प्रथमाया एवातिप्रसक्तेश्च।

न च 'कर्मणि द्वितीया'[१] इति सूत्रेण तत्र द्वितीयेति वक्तव्यम्, धात्वर्थतावच्छेदकफलशालित्वरूपकर्मत्वस्य तत्र स्तोकादौ बाधात्। किञ्चैवं सुखमोदनं पचतीत्यादौ द्विकर्मकतापत्तिः 'सुखं स्वपिति, सुखमास्ते' इत्यादावकर्मकाणां स्वप्यादीनां कर्मत्वस्यानुक्तिसहत्वम्, सुखादेः कर्मतास्वीकारे सुखमोदनः पच्यते स्तोकमोदनः पच्यत इत्यादौ सुखमिति द्वितीयानापत्तिः सुखमोदनस्य पक्ता इत्यादौ कृद्योग ओदनस्येव सुखस्येति षष्ठ्यापत्तिः, सुखमिति द्वितीयानापत्तिश्चेति शतं दोषाः स्युः। तस्मात् क्रियाविशेषणस्थले स्तोकं पचतीत्यादौ द्वितीया सर्वथा कूर्मक्षीरायितेत्यगत्या सर्वैरपि प्रतिपत्तव्यमिति।

---

१. पा.सू. २।३।२।

अत्रैवं समाधीयते व्युत्पत्तिवादकृद्भिर्गदाधरभट्टाचार्यैर्गूढार्थतत्त्वालोकादितद्व्याख्याकारैश्च—यद्यपि स्तोकादिषु धात्वर्थतावच्छेदकफलशालित्वरूपं मुख्यं कर्मत्वं नास्ति, ततश्च 'कर्मणि द्वितीया' इति सूत्रेण द्वितीया तत्र दुःसम्पादा, तथापि 'क्रियाविशेषणानां कर्मत्वम्' इत्यनुशासनबलादतिदिष्टं कर्मत्वमादाय 'कर्मणि द्वितीया'[१] इति सूत्रेण द्वितीयायाः सम्प्रवृत्तौ न किमपि बाधकम्। तथा चोक्तं व्युत्पत्तिवादे प्रथमाविभक्तिप्रकरणे गदाधरभट्टाचार्यैः—'क्रियाविशेषणानां कर्मत्वमित्यनुशासनेन तत्र कर्मत्वातिदेशात्' इति। न च तादात्म्यफलतावच्छेदकान्यतरसम्बन्धेन धात्वर्थतावच्छेदकफलशालित्वमेवास्तां कर्मत्वम्, तच्च विद्यते स्तोकादिष्वपीति मुख्यकर्मत्वस्यैवोपपत्तौ विफलोऽपूर्वस्यातिदेशवचनस्य स्वीकारस्तत्रभवतामिति समाशङ्कनीयम्, गौरवात्, स्तोकं तिष्ठतीत्यादौ धात्वर्थतावच्छेदकफलस्यैवासत्त्वेन दोषप्रसराच्च।

ननु स्तोकं तिष्ठतीत्यादौ न कोऽपि दोषः, फलस्यापि धात्वर्थत्वोपगमेन तत्र धात्वर्थतावच्छेदकफलस्य सत्त्वाद् द्वितीयोपपत्तौ बाधाभावात्। न च फलस्यापि धात्वर्थत्वस्वीकारेऽकर्मकाणां तिष्ठतीत्यादीनामपि धातूनां सकर्मकत्वापत्तिः स्वार्थफलजनकव्यापारवाचकत्वस्यैव सकर्मकत्वादिति वाच्यम्, स्वार्थफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम्, स्वार्थफलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वमिति सकर्मकत्वाकर्मकत्वयोः फलवैयधिकरण्यफलसामानाधिकरण्याभ्यां निर्वचनेन कस्याश्चनापि क्षतेरभावादिति चेत्, अत्रोच्यते—स्तोकं पचतीत्यादौ स्तोकादौ तण्डुलं पचतीत्यादौ तण्डुलादाविव मुख्यकर्मत्वस्याङ्गीकारे तत्रापि कर्मणि लकारापत्त्या 'तण्डुलः पच्यते' इत्यादिप्रयोगाणामिव 'स्तोकं पच्यते' इत्यादिप्रयोगाणामपि साधुत्वं समापद्येत, न च तत्कस्यापीष्टम्, तथा च तादृशप्रयोगाणां तत्र साधुत्वनिवारणाय स्तोकं पचतीत्यादौ स्तोकादीनां मुख्यकर्मत्वं न कथञ्चनापि समभ्युपगन्तव्यम्। यद्यपि फलतावच्छेदकसम्बन्धमात्रेण धात्वर्थतावच्छेदकफलाश्रये कर्मणि लकारस्य स्वीकारेण स्तोकादेः फलतावच्छेदकसम्बन्धेन धात्वर्थतावच्छेदकफलशालित्वाभावात् स्तोकः पच्यत इत्यादयो नापद्यन्तेऽनिष्टप्रयोगास्तथापि मन्दं गच्छति द्रुतं गच्छतीत्यादिप्रयोगाणामनुपपत्तिनिरसनाय क्रियाविशेषणानामातिदेशिकमेव कर्मत्वं सम्प्रतिपादनीयं न मुख्यम्। तथा हि मन्दं गच्छतीत्यादौ उत्तरदेशसंयोगात्मकं फलं न सम्भवति मन्दाद्यात्मकम्, अतोऽत्रोक्तसंयोगानुकूलव्यापार एव तादात्म्येन मन्दादेरन्वयः

---

१. पा.सू. २।३।२।

स्वीकार्यः। एवञ्चात्र मन्दादौ तादात्म्येन धात्वर्थतावच्छेदकफलस्यासत्त्वान्मन्दादि-रूपक्रियाविशेषणवाचकपदाद् द्वितीया न कथमपि निष्पद्यते। आतिदेशिककर्मत्वस्य तत्र समाश्रयणे तु नोक्तदोषप्रसक्तेरवकाशोऽपीति सर्वसामञ्जस्येन क्रियाविशेषणा-नामातिदेशिकमेव कर्मत्वमनुशासनबलेन स्वीकरणीयमिति गदाधरभट्टाचार्यस्त-दनुयायिनश्च सम्मन्यन्ते।

एतेषां मतस्य च सूक्ष्मेक्षिकया सम्पाद्यमाने पर्यालोचने सुविस्पष्टमिदं प्रतिभाति यदमीभिः कर्मत्वं गौरवभयेन फलतावच्छेदकसम्बन्धेन धात्वर्थता-वच्छेदकफलविशिष्टत्वमेव स्वीक्रियते, न तु तादात्म्यफलतावच्छेदकान्यतरसम्बन्धेन धात्वर्थतावच्छेदकफलविशिष्टत्वम्, तथा च क्रियाविशेषणे न केनापि प्रकारेण मुख्यं कर्मत्वं समाश्रयितुं शक्यते। यदि तु प्रामाणिकं गौरवं न दोषायेति रीत्या गौरवभयं परिहाय मुख्यकर्मत्वस्य तादात्म्यफलतावच्छेदकान्यतरसम्बन्धेन धात्वर्थतावच्छेदकफलशालित्वरूपतैव समादर्तव्या, तथा च तादात्म्यसम्बन्धेन धात्वर्थतावच्छेदकफलशालित्वं क्रियाविशेषणस्यापीति प्रतिपाद्यते, तथापि स्तोकं तिष्ठतीत्यादौ अकर्मकधातुस्थले फलस्यैवाभावेन तादृशमुख्यकर्मत्वाप्रसक्त्या द्वितीयानुपपत्तिः, फलस्यापि धात्वर्थत्वाङ्गीकृतौ तु सकर्मकाकर्मकत्वव्यवहारोच्छेदा-पत्तिः, व्यापारस्य फलवैयधिकरण्यफलसामानाधिकरण्याभ्यां सकर्मकाकर्मकत्वयो-र्निरुक्तौ तु मन्दं गच्छति द्रुतं गच्छतीत्यादावुत्तरदेशसंयोगात्मकफलस्य मन्दा-द्यात्मकत्वाभावेन तदनुकूलव्यापार एव मन्दाद्यर्थानामन्वयस्यावश्याभ्युपेयतया तादात्म्यसम्बन्धेनापि मन्दादेर्धात्वर्थतावच्छेदकफलविशिष्टत्वाभावान्मुख्यकर्मत्वस्य कथमप्यप्राप्त्या द्वितीयानुपपत्तिरिति दोषबाहुल्यनिवारणाय आतिदेशिकमेव कर्मत्वं सर्वत्र क्रियाविशेषणस्थले 'क्रियाविशेषणानां कर्मत्व'मिति वचनबलेन स्वीकार्यम्। तच्च वचनं न कुत्रापि व्याकरणे समासाद्यत इति तस्य सिद्धये तादृशवचनस्या-पूर्वस्यापि कल्पनं विधातव्यञ्चेति।

तच्चेदं गदाधरभट्टाचार्यादीनां मतं शब्दशक्तिप्रकाशिकाकारजगदीश-तर्कालङ्कारप्रभृतयोऽपरे नैय्यायिकप्रवरा भाट्टदीपिकाभाट्टरहस्यादिनिर्मातृखण्डदेवादयो मीमांसकाश्च न सहन्ते। तैरुच्यते यत् क्रियाविशेषणानां मुख्यं कर्मत्वन्तु सुदूरपराहतमेव; किन्त्वातिदेशिकमपि कर्मत्वं तत्र नास्ति। ननु तथा सति कथं तद्वाचकपदानां द्वितीयान्ततेति चेदवहितेन मनसा श्रूयताम्—न केवलं कर्मण्येव द्वितीया भवति; किन्तु कर्मभिन्नस्थलेऽपि सा दृश्यत एव, तथा चात्र 'उभसर्वतसोः

कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।।' इति महाभाष्यश्लोकवार्त्तिकघटकस्य 'ततोऽन्यत्रापि दृश्यते' इत्यंशस्यान्यत्र क्रियाविशेषणस्थले द्वितीया दृश्यत इत्यभिप्रायकस्य बलेन द्वितीया सम्पद्यते।

अत एव पदवाक्यरत्नाकरे गोकुलनाथोपाध्यायाः प्रत्यपीपदन्नुक्त-श्लोकवार्त्तिकघटकस्य 'ततोऽन्यत्रापि दृश्यते' इत्यंशस्य विवरणे—'अन्यत्र स्तोकं पचतीत्यादौ क्रिया-विशेषणस्थले' इति। भाट्टरहस्ये खण्डदेवेनाप्येष एवार्थः समभाणि द्वितीया-विभक्त्यर्थविचारप्रकरणे कथं तर्हि तत्र द्वितीयानियमः? उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।। इत्यनुशासनादिति गृहाण। अत्र ततोऽन्यत्रापि प्रतिपदोक्तादन्यत्र क्रियाविशेषणेऽपीत्यर्थः। अत एव अन्यत्रापि दृश्यत इत्युक्तम्। तदेतदाह ''अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इत्यग्रिमप्रतिपदोक्तपरतया भाष्यानारूढं व्याख्यानमप्यसङ्गतम्, वैयर्थ्यापत्तेः। तस्मात् सिद्धं क्रियाविशेषणेषु द्वितीयामात्रानुशासनम्'' इति। एवञ्चात्र समुद्धृताभ्यां पदवाक्यरत्नाकर-भाट्टरहस्य-ग्रन्थयोः प्रघट्टकाभ्यां सुस्फुटमिदं समवबुध्यते यत्तद्ग्रन्थप्रणेतारः क्रियाविशेषणवाचकपदे या द्वितीया-विभक्तिर्न तां कारकविभक्तित्वेन स्वीकुर्वते; किन्तूपपदविभक्तित्वेनैव तामुररीकुर्वन्ति।

अत एव शब्दशक्तिप्रकाशिकायां जगदीशतर्कालङ्कारैः कारकविभक्तेर्लक्षणं व्याचक्षाणैः क्रियाविशेषणवाचकपदद्वितीयाव्यावर्तनाय 'धात्वर्थांशे प्रकारो यः सुबर्थः सोऽत्र कारकम्' इति कारकविभक्तिलक्षणे सुबर्थ इति निवेशः संविहितः। तथा हि शब्दशक्तिप्रकाशिकायां कारकप्रकरणे 'कारकार्थेतरार्थां च सुब् द्विधा च विभज्यते। धात्वर्थांशे प्रकारो यः सुबर्थः सोऽत्र कारकम्।।' इति कारिकाया व्याख्यानावसरे तर्कालङ्कारैः प्रतिपादयाम्बभूवे—'यादृशेन नामार्थेनावच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेऽन्वयः स एव तादृशधात्वर्थे कारकतया व्यपदिश्यते, तेन वृक्षात् पततीत्यादौ वृक्षादेरपि पतनादिक्रियायामपादानादिकारकव्यवहारः। स्तोकं पचतीत्यादौ क्रियायां प्रकारीभूतोऽपि स्तोकादिर्न कारकम्, सुपानुपस्थापनात्। द्वितीया तु तत्र क्लीबलिङ्गत्ववदानुशासनिक्येव। स्तोकपाक इत्यादिस्तु तत्पुरुषो गिरिकाण इत्यादिवद् विशेषविधेरेव' इति। एतेन जगदीशमतेऽपि स्तोकं पचतीत्यादौ क्रियाविशेषणवाचकपदाद् द्वितीयायाः कारकविभक्तित्वं नास्ति; किन्तूपपदविभक्तित्वमेवेति नाप्रत्यक्षम्।

तथा च तन्मते क्रियाविशेषणानां कर्मत्वं न कयापि रीत्या सम्भवदुक्तिकमिति विस्पष्टं प्रतीयते। कर्मत्वाभावेऽपि च प्रतीयमाना तत्र द्वितीया क्लीबलिङ्गत्ववदानुशासनिक्येव स्वीकर्तव्या। अनुशासनञ्च 'उभसर्वतसो: कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।।' इति महाभाष्योद्धृतश्लोकवार्तिकप्रमाणबलेन द्वितीयाविषयकमेव कल्पयितव्यं न तु कर्मत्वविषयकं लाघवात्। एवञ्च व्युत्पत्तिवादस्य प्रथमाविभक्तिविचारप्रकरणे गदाधरभट्टाचार्यैरुक्तं 'क्रियाविशेषणानां कर्मत्वम्' इत्यनुशासनं नातीव समञ्जसम्, गौरवात् प्रमाणशून्यत्वाच्च। अथवा गदाधरभट्टाचार्योक्तस्य 'क्रियाविशेषणानां कर्मत्वम्' इत्यनुशासनस्याप्युक्तप्रमाणबलेन क्रियाविशेषणानां द्वितीयान्तत्वमित्यत्रैवार्थे तात्पर्यं स्वीकरणीयं सकलप्रामाणिकग्रन्थसंवादान्न त्वातिदेशिके कर्मत्वे।

यद्वा 'क्रियाविशेषणानां कर्मत्व'मित्यस्य 'उभसर्वतसो: कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।।' इत्यंशीभूतेन 'ततोऽन्यत्रापि दृश्यते' इत्यनेन क्रियाविशेषणं कर्मवद्भवतीत्यर्थ: कल्प्यते, तथा च तत्रातिदिष्टं कर्मत्वमङ्गीक्रियते। अतिदेशफलञ्च कर्मप्रवचनीयादिसंज्ञावत् केवलं द्वितीयैव तेन न कर्मणि लकारप्रसक्तिरिति बोध्यम्। एतेन च सकलनैय्यायिकसम्प्रदायविरुद्धार्थ-भाषिता गदाधरभट्टाचार्यस्येत्यपि प्रत्युक्तं समवगन्तव्यम्। इत्थं च निखिलानां नैय्यायिकानां मतस्य सुसूक्ष्मं पर्यालोचनया सुदृढमिदमभिधातुं पार्यते यत् क्रियाविशेषणवाचकपदाद् द्वितीयायास्तेषां मते उपपदविभक्तित्वमेव न कारकविभक्तित्वमिति।

ननु क्रियाविशेषणद्वितीयाया: कारकविभक्तित्वाभावे 'स्तोकपक्ता' इत्यादौ समासो नोपपद्यते, असति विशेषानुशासने कारकविभक्तिभिन्नविभक्त्यन्तेन समासस्यासाधुत्वादिति चेत्, न, स्तोकं पक्ता इति विग्रहे कर्मधारयसमासे प्रतिबन्धकाभावात्। न च पदद्वयार्थयोर्यत्राभेदो यत्र च पदद्वयस्य समानविभक्तिकत्वं तत्रैव कर्मधारयसमास:, न चैतदस्ति प्रकृत इति कथं कर्मधारय इतिं वाच्यम्, महाकविर्महाविज्ञ इत्यादाविव स्तोकादे: पाकादावेकदेशेऽन्वयेऽपि समासस्य साधुत्वस्वीकारात्। समानविभक्तिकत्वन्तु कर्मधारयसमासे न प्रयोजकम्, 'तत्पुरुष: समानाधिकरण: कर्मधारय:'[1] इत्यनुशासनेन पदयोर्द्वयो: सामानाधिकरण्यमात्रस्य समपेक्षणात्। सामानाधिकरण्यञ्च तदर्थयोरभेद एव, स च वर्ततेऽत्रापीति न स्तोकपक्ता इत्यादौ क्रियाविशेषणद्वितीयाया उपपदविभक्तित्वे समासानुपपत्ति:। तथा

१. पा.सू. १।२।४२।

चोक्तं शब्दशक्तिप्रकाशिकायां जगदीशतर्कालङ्कारैस्तत्पुरुषसमासप्रकरणे तत्पुरुष-लक्षणकारिकाविवृतौ—'स्तोकपक्ता इत्यादौ क्रियाविशेषणैः कर्मधारय एव महाकविर्महाविज्ञ इत्यादौ कवित्वादाविव प्रकृतेऽप्येकनामार्थैकदेशे पचनादाव-परनामार्थस्याभेदान्वयबोधकतया तथात्वसम्भवात्। क्रियाविशेषणैः समास एवाव्युत्पन्न इति तु न देश्यम्, 'स्तोकनम्रा स्तनाभ्याम्' इत्यादेः कालिदासाद्यैः प्रयुक्तत्वात्' इति।

यथा च नैय्यायिकाः क्रियाविशेषणानां कर्मत्वं नातिष्ठन्ते तथा मीमांसका अपि तेषां तन्नाङ्गीकुर्वते। नैय्यायिकैर्यं पन्थानमाश्रित्य क्रियाविशेषणानां कर्मत्वं व्याखण्डि स पन्थाः पूर्वं व्युत्पत्तिवादकृन्मतव्याख्यानप्रसङ्गेन समभ्यधीयतास्माभिः साम्प्रतं मीमांसकानामपि क्रियाविशेषणकर्मत्वखण्डनप्रक्रिया खलु मनाक् समुप-वर्ण्यते—ननु साध्यत्वविशिष्टधात्वर्थ एव क्रिया, धात्वर्थत्वञ्च पच्यादिस्थले यथा फूत्कारादिव्यापारस्य तथा विक्लित्त्यादेः फलस्यापीति तस्यापि क्रियात्वमभ्युपेयमेव। विक्लित्त्यादिफलस्य च क्रियाजन्योत्पत्त्याश्रयत्वेन मुख्यकर्मत्वात् प्रातिपदिकत्वा-भावेन ततोऽसम्भवन्ती द्वितीया तद्विशेषणे स्तोकादौ सञ्जायते। विक्लित्तेरिव तदुत्पत्तेरपि पचन्तीत्यस्य विक्लित्तिमुत्पादयन्तीति विवरणानुरोधेन धातुवाच्यत्व-स्वीकरणेन विक्लित्तेरिव तदुत्पत्तेरपि फलत्वात् क्रियाजन्योत्पत्तिरूपफलशालित्वेन विक्लित्तेर्मुख्यकर्मत्वस्वीकारे न दोषः।

न च विक्लित्तेर्मुख्यकर्मत्वे तण्डुलं पचतीतिवत् विक्लित्तिं पचतीति प्रयोगापत्तिः, तस्या धातुनैवोक्तत्वेन 'उक्तार्थानामप्रयोगः' इति न्यायेनाप्रयोगात्। अकर्मकधातुस्थलेऽपि सुखं स्वपितीत्यादौ धातुवाच्यफलस्य शरीरलाघवादेः सुखसाधनत्वात् सुखपदेन सुखसाधनं लक्षयित्वा शरीरलाघवाद्युत्पत्तिरूप-फलाश्रयत्वेन शरीरलाघवादेः फलस्य कर्मत्वात् तद्विशेषणे सुखसाधनाद्यर्थकसुखादौ द्वितीयान्ततासिद्धिः।

न चैवं स्वप्यादिधातूनां शरीरलाघवादिरूपफलस्यापि उत्पत्त्याश्रयत्वेन कर्मतास्वीकारे तेषामकर्मकत्वानापत्तिः सकर्मकत्वापत्तिश्च दूषणे स्यातामिति वाच्यम्, स्वव्यधिकरणफलाश्रयकव्यापारवाचित्वाभावेन तेषामकर्मकतायाः सकर्मकत्वाभावस्य च निष्पत्तेः। एवञ्च उत्पत्त्याश्रयरूपकर्मणः सकर्मकाकर्मकसाधारणतया अकर्मकाणां स्वप्यादिधातूनां तादृशकर्मसत्त्वेऽपि न क्षतिः। तादृशकर्मकारकमादाय कर्मणि लकारः कृद्योगनिमित्तिका वा षष्ठी तु नापादनीया व्यापारव्यधिकरण-

धातुवाच्यमुख्यफलाश्रयरूपकर्मण्येव तयोः प्रवृत्तिस्वीकाराद् उत्पत्तेरमुख्यफलत्वेन तदाश्रये तयोरप्रवृत्तेः।

अतश्च स्तोकमोदनः पच्यते, स्तोकमोदनस्य पक्ता इत्यादौ स्तोकादिपदे न प्रथमाषष्ठ्योरापत्तिः, द्वितीयान्तताया अनापत्तिश्चेति क्रियाविशेषणानां मुख्य-कर्मत्वस्वीकारे दोषलेशस्याप्यभावेन तत्र मुख्यकर्मण्येव द्वितीया स्वीकार्या इति चेत्, मैवम्, व्यापारव्यधिकरणधातुवाच्यमुख्यफलाश्रयरूपकर्मण्येव लकारषष्ठ्योः प्रवृत्तौ चैत्रेणास्यते मासः सुप्यते रात्रिरित्यादौ कर्मलकाराप्रसङ्गः, मासादिरूपकर्मणो व्यापारव्यधिकरणधातुवाच्यमुख्यफलाश्रयत्वाभावात्। तादृशफलस्य तत्र स्वीकारे तु आसि-स्वप्यादिधातूनामपि धातूपात्तफलसमानाधिकरणव्यापारवाचित्वाभावेन स्वाभाविकाकर्मकत्वभङ्गप्रसङ्गः स्यात्। तस्मात् कर्मत्वं तादृशं निर्वचनीयं येन निखिलदोषराशिनिरासः सम्भवेत्। परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकीभूत-फलशालित्वं तत्समनियताखण्डोपाधिरूपं वा कर्मत्वन्तु न निर्वक्तव्यम्, तदभावेऽपि चैत्रो मासमास्ते, आस्यते मासश्चैत्रेण इत्यादौ कर्मत्वावश्यकत्वेन व्यभिचारात्; किन्तु किमित्याद्याकाङ्क्षापूरकत्वसमनियतमेवाखण्डोपाधिरूपं कर्मत्वं स्वीकरणीयम्, तच्च कर्मत्वं पचतीत्यादौ तण्डुलस्येव आस्यत इत्यादौ मासादेरपि समानमिति युज्यन्ते तत्र द्वितीयाकर्मलकारादयः। क्रियाविशेषणानान्तु किमित्याकाराकाङ्क्षापूरकत्वं नास्ति; किन्तु कथमित्याकाराकाङ्क्षापूरकत्वमेव। अत एव तत्र कथं पचति? सुखं पचति, कथं स्वपिति? सुखं स्वपिति, कीदृशं पचति? मृदु स्तोकं वा पचतीत्यादिरूपः प्रश्नोत्तरभावः सङ्गच्छते। तस्मात् क्रियाविशेषणस्थले किमित्याकाराकाङ्क्षापूरकत्वाभावान्न कथमपि कर्मत्वं सम्भवति, तथा च तदनुरोधेन उत्पत्तेः फलस्य धातुवाच्यत्वकल्पना तयोरन्यलभ्यत्वाद् विफलैव।

कर्मत्वाभावेऽपि क्रियाविशेषणेषु द्वितीयानियमस्तु पूर्वोक्तरीत्या 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।।' इत्यनुशासनेन स्वीकर्तव्य इति मीमांसकानां सिद्धान्तः। एवञ्च तत्तन्मतपर्यालोचनया मीमांसकनैय्यायिकानामुभयेषामपि मतेन क्रियाविशेषणानां कर्मत्वाभावः, कर्मत्वाभावे च तद्वाचकपदद्वितीयायाः कारकविभक्तित्वाभाव उपपदविभक्तित्वञ्च साधु सङ्गच्छन्त इति नात्र संशीतिलेशोऽपि।

वैय्याकरणास्तु तमिमं नैय्यायिकमीमांसकादीनां क्रियाविशेषणविषयकं सिद्धान्तं न रमणीयं परिगणयन्ति, ते च तत्र सर्वत्र क्रियाविशेषणे 'कर्तुरीप्सिततमं

कर्म'[1] इति सूत्रेण कर्मसंज्ञां विधाय 'कर्मणि द्वितीया'[2] इति सूत्रेण द्वितीयामेव साधीयसीं सम्मन्वते। वैय्याकरणेषु केवलं नागेशभट्ट एव एतादृक्षः सञ्चकास्ति येन क्रियाविशेषणे द्वितीयामनङ्गीकृत्य तत्र प्रथमैव युक्तेति समभिदधे। यद्यपि नागेशभट्टेनापि शब्देन्दुशेखरे बहुत्र कारकप्रकरणे क्रियाविशेषणे द्वितीयाया एव समुपपादनं संव्यधायि, तथापि तत् तेन भट्टोजिदीक्षितव्याख्यानप्रसङ्गेन तन्मतानुरोधमास्थाय समाचरितं स्यान्न तु स्वीयमतत्वेनेत्यनुमातव्यम्, इतरथा तु तेन लघुशब्देन्दुशेखरे तद्धितप्रकरणे 'तत्रत्यनुपूर्वमीपलोमकूलम्'[3] इति सूत्रस्थ-'क्रियाविशेषणत्वाद् द्वितीये'ति सिद्धान्तकौमुदीग्रन्थस्य यथाग्रन्थं व्याख्यां विधाय अन्ते 'प्रथमान्तत्वञ्च युक्तम्' इति कथं प्रोच्येत? तस्मान्नागेशभट्टाय क्रियाविशेषणानां प्रथमान्तत्वमेव बहुलं रोचत इति मतस्य निर्धारणे विदुषां न विप्रतिपत्तिलेशोऽपि समभ्युदियादिति मन्तव्यम्।

तच्च नागेशमतं क्रियाविशेषणविषय इत्थमुपपादयन्ति तन्मतमर्मविदो विपश्चितः—तादात्म्यफलतावच्छेदकसम्बन्धान्यतरसम्बन्धेन धात्वर्थतावच्छेदक-फलविशिष्टस्य कर्मसंज्ञकत्वं क्रियाविशेषणानां तादात्म्येन फलेऽन्वयञ्चाभ्युपेत्य 'कर्मणि द्वितीया'[4] इति सूत्रेण तत्र द्वितीयास्वीकारे फलावच्छिन्नव्यापारस्यैव सर्वत्र धात्वर्थत्वेन फलव्यापारयोः सामानाधिकरण्यासामानाधिकरण्याभ्यां सकर्मका-कर्मकत्वव्यवस्थायाः सूपपादत्वेऽपि क्रियाविशेषणस्य मुख्यकर्मत्वस्वीकारे 'लः कर्मणि च भावे चाकर्मकेभ्यः'[5] इति सूत्रेण तत्रापि लकारापत्तौ स्तोकः पच्यते, सुखमास्यते इत्यादिप्रयोगाः समापद्येरन्। तादात्म्यसम्बन्धानवच्छिन्नधात्वर्थता-वच्छेदकफलाश्रयत्वशालिनि कर्मण्येव लकार इति समभ्युपगम्य तादृशदोषदूरीकरणे तु 'कर्मणि द्वितीया' इत्यत्र कर्मशब्देन तादात्म्यफलतावच्छेदकान्यतरसम्बन्धेन धात्वर्थतावच्छेदकफलशालिनः कर्मणो ग्रहणम्, 'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यत्र तु कर्मशब्देन तादात्म्यसम्बन्धानवच्छिन्नधात्वर्थतावच्छेदकफलान्वयस्य कर्मणो ग्रहणमिति शक्तिभेदे गौरवं शाब्दबोधस्य तादात्म्यसम्बन्धानवच्छिन्नत्वादि-घटितकर्मत्वविषयकत्वेनातिरिक्तविषयकत्वापत्त्या प्रतिबध्यप्रतिबन्धकभावगुरुत्व-प्रसक्तिश्च स्याताम्। यद्यपि तत्रापि यथा व्रैहेयमोदनं पचतीत्यत्र विशेषणान्वयाकाङ्क्षाभिव्यक्त्यर्था द्वितीया कर्मीभूतौदनान्वयप्रयोजकाकाङ्क्षा च

१. पा.सू. १।४।४९;
२. तदेव–२।३।२।
३. तदेव–४।४।२८;
४. तदेव–२।३।२।
५. तदेव–३।४।६९।

विशेषणपदस्य द्वितीयान्तत्वे सत्येवाभिव्यज्यते तथा धात्वर्थतावच्छेदकीभूतोत्पत्तिरूपफलाश्रयत्वेन कर्मीभूतविक्लित्त्यन्वयप्रयोजिकाकाङ्क्षाऽपि स्तोकादिविशेषणपदस्य द्वितीयान्तत्वे सत्येव व्यज्येत इति व्रैहेयपदादिव स्तोकादिपदादपि आकाङ्क्षानिर्वाहायैव द्वितीया स्वीकार्या। अत एव भावनाकर्महोमविशेषणाग्निहोत्रादिपदाद् द्वितीया, भावनाकरणयागविशेषणवाजपेयादिपदात् तृतीयेति मीमांसकानां वचनं सङ्गच्छते। 'कर्तुरीप्सिततमं कर्म'[1] इत्यनेन कर्मसंज्ञा कर्मणि लकारश्च व्यापारव्यधिकरणफलाश्रयीभूते धात्ववाच्ये कर्मण्येव, तेन सुखोत्पत्त्यनुकूलव्यापारवाचकस्य रमतेः 'आत्मानं रमते, आत्मा रम्यते' इत्यादिप्रयोगाणां नापत्तिः, फलस्य व्यापारसमानाधिकरणत्वात्।

न च शय्याङ्गविलक्षणसंयोगानुकूलव्यापारवाचिनः स्वपतेः 'अङ्गं स्वपिति', 'अङ्गं सुप्यते' इत्यादिप्रयोगातिप्रसङ्गः, अङ्गस्य धातुवाच्यकर्मत्वात्। तथा च विक्लित्तेरपि धातुवाच्यकर्मत्वेन तत्र लकारासम्भवात् 'स्तोकः पच्यते' इत्यादिप्रयोगाणां नापत्तिरिति वक्तुं शक्यते, तथापि विशेषणसुपामव्यभिचारेण विशेष्याकाङ्क्षाभिव्यक्त्यर्थत्वेन द्वितीयान्तविशेष्यवाचकपदार्थविशेषणपदस्य व्रैहेयमोदनं पचतीत्यादौ द्वितीयान्ततायाः सम्भवेऽपि क्रियाविशेषणस्थले वाजपेयेन यजेतेत्यत्र व्यभिचाराद् विशेषणस्य द्वितीयान्तताया न सम्भवः। तस्मान्नाकाङ्क्षानिर्वाहायापि क्रियाविशेषणस्थले द्वितीयास्वीकरणं रमणीयतामावहेत्।

एवञ्च क्रियाविशेषणानां कर्मतास्वीकारपक्षस्य गौरवशक्तिद्वयकल्पनादिविविधदोषसंघातग्रस्ततया साधुत्वार्थं तत्र कस्याश्चन विभक्तेरवश्याभ्युपेयत्वेन प्रथमं प्राप्तायाः प्रथमाया अतिक्रमणे हेतुविरहात् 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा'[2] इति सूत्रेण प्रातिपदिकार्थत्वात् प्रथमैवाङ्गीकरणीया न द्वितीयेति नागेशभट्टानामाशयः। तन्मतरीत्या क्रियाविशेषणस्थले सर्वत्र प्रथमैव समुचिता। क्लीबतायास्तत्र सर्वत्र औत्सर्गिकत्वेन क्लीबलिङ्गे प्रथमाद्वितीयाविभक्त्यो रूपभेदाभावात् तत्र प्रथमायाः स्वीकारेऽपि न किञ्चिदसामञ्जस्यमिति शक्तिभेदगौरवादिनिखिलदोषशून्यतया लाघवाच्च क्रियाविशेषणस्थले द्वितीयास्वीकरणापेक्षया प्रथमास्वीकरणमेव ज्याय इति तन्मतपक्षपातिनः सम्मन्यन्ते।

तदिदं क्रियाविशेषणानां प्रथमान्ततायाः परिपोषकं मतं सूक्ष्मदृष्ट्या सुविवेचनेनाविचारितरमणीयमिवाभाति। कामं सन्त्यस्मिन् मते आपेक्षिकं किमपि

१. पा.सू. १।४।४९; २. तदेव–२।३।४६।

लाघवं कर्मशब्दस्य शक्तिद्वयकल्पनाप्रसूतगौरवविरहो व्यपदेशिवद्भावादिसमाश्रयणापेक्षाराहित्यञ्च। तथापि तदिदं सर्वमापातत एव वस्तुतस्तु मतेऽस्मिन् महदसामञ्जस्यं जागर्तितराम्। तथा हि क्रियाविशेषणानां प्रथमान्ततायाः स्वीकारे 'निपुणस्त्वं पचसि, मृदु त्वा राजा द्रविणेन योजयति' इत्यादौ मृदु इति क्रिया-विशेषणस्य प्रथमान्तत्वेन 'सपूर्वायाः प्रथमाया विभाषा'[१] इति सूत्रस्य प्रवृत्त्या त्वादेशस्य वैकल्पिकत्वेन 'निपुणस्त्वं पचसि, मृदु त्वां राजा द्रविणेन योजयति' इत्याद्यपि प्रसज्येत। इष्टञ्च तत्र 'त्वामौ द्वितीयायाः'[२] इति नित्यस्य त्वादेशस्य विधानेन केवलं निपुणस्त्वं पचसि मृदु त्वा राजा द्रविणेन योजयतीत्याद्येव। क्रियाविशेषणस्य द्वितीयान्तत्वे तु नायं दोषः, प्रथमान्तत्वाभावेन तत्र 'सपूर्वायाः प्रथमाया विभाषा'[३] इति सूत्रस्याप्रवृत्तेः, 'त्वामौ द्वितीयायाः'[४] इत्यस्यैव प्रवृत्तेश्च। अन्वादेशे हि नित्यं भवन्ति वानावादय आदेशाः 'अन्वादेशे तु नित्यं स्युरि'ति नियमात्, तथा चात्रान्वादेशत्वेन 'निपुणत्वं पचसि, मृदु त्वा राजा द्रविणेन योजयति' इत्येव समुचितम्, न तु मृदु त्वां राजा द्रविणेन योजयतीत्यपि। क्रियाविशेषणस्य प्रथमान्ततायान्तु तदपि समापद्येतेति क्रियाविशेषणस्य प्रथमान्तत्वे महद् दूषणमिति भावः।

किञ्च क्रियाविशेषणानां प्रथमान्तत्वे 'सकृल्ल्वौ' इत्यत्र यण् न स्यात्, 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' इति नियमेन गतिकारकपूर्वपदस्यैव यणः समभ्युपगमात्। 'सकृल्ल्वौ' इत्यत्र सकृदिति क्रियाविशेषणवाचकं पदन्तु न गतिसंज्ञकम्, नापि च कर्मत्वाभावेन कारकसंज्ञकं भवतां मते। तथा चात्र 'ओः सुपि'[५] इति सूत्रेण विधीयमानस्य यणो न कथमपि प्रवृत्तिः सम्भवति। क्रियाविशेषणानां द्वितीयान्तत्वे तु कर्मणः कारकत्वेन कारकपूर्वकत्वाद् यणः सुसाधत्वमेवेति विद्वद्भिर्विभावनीयम्। अपि च क्रियाविशेषणानां नपुंसकत्वमपि अनियतलिङ्गस्थल एव, नियतलिङ्गस्थले तु न नपुंसकता; किन्तु तत्तल्लिङ्गतैवेति भाट्टरहस्ये पदवाक्यरत्नाकरे व्युत्पत्तिवादगूढार्थतत्त्वालोके च स्फुटम्। तथा च तादृशस्थले आदि पचतीत्यादौ क्रियाविशेषणानां प्रथमान्तत्वस्वीकारे आदिः पचतीति प्रयोगापत्तिः, आदिं पचतीति प्रयोगानापत्तिश्च प्रसज्येयाताम्। तस्मात् क्रियाविशेषणानां प्रथमान्ततापक्षो न सुविचारपेशल इति वैयाकरणमूर्धाभिषिक्ता भाष्यकार-कैयट-दीक्षितादयः पक्षमेनं नोररीकुर्वन्ति।

---

१. पा.सू. ८।१।२६; २. तदेव–८।१।२३।

३. तदेव–८।१।२६; ४. तदेव–८।१।२३।

५. तदेव–६।४।८३।

ते तु तत्र दृढतरप्रमाणयुक्तिबलेन कर्मत्वं संसाध्य 'कर्मणि द्वितीया'[१] इति सूत्रेण कर्मणि द्वितीयैवेति सङ्गिरन्ते। 'कर्तुरीप्सिततमं कर्म'[२] इति सूत्रेण क्रियाविशेषणानां कर्मसंज्ञा, कर्मसंज्ञकत्वाच्च 'कर्मणि द्वितीया' इति सूत्रेण तत्र द्वितीयाविभक्तिरिति हि तेषां सिद्धान्तः। अमुमेव सिद्धान्तं सर्वे प्राचीना नवीनाश्च व्याकृतिविदः समनुमोदन्ते। सूत्रवार्तिकभाष्यकारादिसकलप्रामाणिकजनपरिगृहीतत्वान्निर्दुष्टत्वाच्चायमेव पक्षः पूर्वेभ्यस्त्रिभ्योऽपि पक्षेभ्यश्चारुतरतां बिभर्तीति मतमेतत् सप्रमाणं विस्तरेण निपुणतरमुपपादयिष्यामः।

महामुनिना पाणिनिना प्रणीतेऽष्टके व्याकरणे सूत्रमस्त्येकम् 'तत्प्रत्यनुपूर्वमीपलोमकूलम्'[३] इति। तत्र हि 'ओजःसहोऽम्भसा वर्तते'[४] इति सूत्राद् 'वर्तते' इत्यस्यानुवृत्तिं विधाय प्रति अनु इत्येवंपूर्वेभ्य ईपलोमकूलशब्देभ्यो द्वितीयासमर्थेभ्यो वर्तते इत्येतस्मिन्नर्थे ठक्प्रत्ययो भवतीति सूत्रस्यार्थः सम्पद्यते। स चायमर्थो वृतेरकर्मकत्वात्तस्य कर्मणा सम्बन्धाभावे कथं सम्भवतीति जायमानायामाशङ्कायां क्रियाविशेषणमकर्मकाणामपि कर्म भवतीति समाधिर्विहितः। तदुक्तं काशिकायां 'ननु च वृतिरकर्मकः, तस्य कथं कर्मणा सम्बन्धः। क्रियाविशेषणमकर्मकाणामपि कर्म भवति' इति। एतेन सुस्पष्टमवबुध्यते यत् क्रियाविशेषणं कर्म भवति, तच्च न केवलं सकर्मकाणामेव धातूनां किन्त्वकर्मकाणामपि तज्जायत इति।

न केवलं 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इति सूत्र एव काशिकाकारेण क्रियाविशेषणस्य कर्मता प्रण्यगादि; किन्तु 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य'[५] इति सूत्रेऽपि क्रियाविशेषणानां कर्मत्वं सुविस्पष्टं निगदितं तेन, यथा—'करणे इति किम्, क्रियाविशेषणे कर्मणि मा भूत् स्तोकं मुञ्चति' इति। भट्टोजिदीक्षितेनापि सिद्धान्तकौमुद्यां तद्धितेषु ठगधिकारप्रकरणे 'तत्प्रत्यनुपूर्वमीपलोमकूलम्' इति सूत्रस्य व्याख्याप्रसङ्गेन, प्रौढमनोरमायाञ्च कारकप्रकरणे 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य' इति सूत्रे अयमेवार्थः साधु समर्थितः। यथा, 'द्वितीयान्तादस्माद् वर्तते इत्यस्मिन्नर्थे ठक् स्यात्। क्रियाविशेषणत्वाद् द्वितीया' इति (सिद्धान्तकौमुदी)। ''एतेन 'करणे च स्तोक' इति सूत्रे 'करणे किम्? क्रियाविशेषणे कर्मणि मा भूत् स्तोकं पचति, क्रिया न द्रव्यम्' इति प्राचां ग्रन्थो व्याख्यातः'' इति (प्रौढमनोरमा)।

---

१. पा.सू. २।३।२;
२. तदेव–१।४।४९।
३. तदेव–४।४।२८;
४. तदेव–४।४।२७।
५. तदेव–२।३।३३।

कैयटेनापि 'पूजनात् पूजितमनुदात्तम्'[1] इति सूत्रस्थमहाभाष्यप्रदीपे 'दारुणाध्यापक' इति भाष्यीयव्याख्यायां 'क्रियाविशेषणं दारुणशब्दो द्वितीयान्तः' इति संव्याहृत्य क्रियाविशेषणस्य कर्मत्वाद् द्वितीयान्तत्वमेव समनुमोदितम्। हरदत्तेनापि काशिकाव्याख्यायां पदमञ्जर्याम् 'अनुग्वलंगामी'[2] इति सूत्रे 'अनुगु इत्यस्य क्रियाविशेषणत्वाद् द्वितीयान्तादिह प्रत्ययः' इति समाभाष्य क्रियाविशेषणानां कर्मत्वाद् द्वितीयान्तता इति मतस्यैव पृष्ठपोषणमाचरितम्। एवञ्चैतैः वामन-जयादित्य-कैयट-भट्टोजिदीक्षित-हरदत्त-ग्रन्थानामुद्धरणैः सुविशदमिदमुपजायते यत् क्रियाविशेषणानां कर्मतायां द्वितीयान्ततायाञ्च न किमपि विद्यते वैमत्यं मिथो वैय्याकरणानाम्। पाणिनिमारभ्य भट्टोजिदीक्षितपर्यन्तं सर्वेऽपि शाब्दिकप्रवराः क्रियाविशेषणानां कर्मत्वं तस्माद् द्वितीयान्तत्वञ्च निःसङ्कोचं समभ्युपयन्ति।

नागेशभट्टगुरुणा हरिदीक्षितेनापि स्वीयायां शब्दरत्ननामिकायां प्रौढमनोरमा-व्याख्यायां कारकप्रकरणे 'कर्तुरीप्सिततमं कर्म'[3] इति सूत्रे 'फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात् कर्मत्वम्। अत एव तत्समानाधिकरणे शोभनं पचतीत्यादौ कर्मत्वसिद्धिः' इति सन्दर्भेण क्रियाविशेषणानां कर्मत्वं द्वितीयान्तत्वञ्च स्फुटं प्रत्यपादिषाताम्। यद्यपि नागेशभट्टेन 'तत्प्रत्यनुपूर्वमीपलोमकूलम्'[4] इति सूत्रे शब्देन्दुशेखरे क्रियाविशेषणानां प्रथमान्ततैव युक्तेति समभाणि, तथापि तत्कथनं तस्य प्रौढिवादमात्रमेवेति सम्प्रकल्पनीयम्। अन्यथा स तस्मिन्नेव ग्रन्थे बहुत्र कारकप्रकरणे 'कारके'[5], 'कर्तुरीप्सिततमं कर्म'[6], 'करणे च स्तोकाल्पकृच्छ्र-कतिपयस्यासत्त्ववचनस्य'[7], 'कर्तृकर्मणोः कृति'[8] इत्यादिसूत्रेषु महाभाष्य-प्रदीपोद्द्योते 'समर्थः पदविधिः'[9], 'पूजनात् पूजितमनुदात्तम्'[10] इति सूत्रयोश्च क्रियाविशेषणस्य कर्मताया द्वितीयान्ततायाश्च सोपपत्तिकं प्रतिपादनं न व्यधास्यत्। तत्र हि तेन 'एवं स्तोकं पचतीत्यादौ फलस्यापि (जनकत्वम्)....फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात् कर्मत्वम्। अत एव तत्समानाधिकरणे स्तोकं पचतीत्यादौ कर्मत्वसिद्धिः' इत्यादिभिः प्रघट्टकैः क्रियाविशेषणानां कारकत्वं कर्मत्वं

---

१. पा.सू. ८।१।६७; २. तदेव-५।२।१५।
३. तदेव-१।४।४९; ४. तदेव-४।४।२८।
५. तदेव-१।४।२३; ६. तदेव-१।४।४९।
७. तदेव-२।३।३३; ८. तदेव-२।३।६५।
९. तदेव-२।१।१; १०. तदेव-८।१।६७।

द्वितीयान्तत्वञ्च साधु समुपापाद्यन्त। तस्मान्नागेशभट्टोऽपि क्रियाविशेषणानां कर्मत्वे न प्रतिकूल इति सम्प्रतिपत्तव्यम्।

श्रीमता कौण्डभट्टेनापि वैयाकरणभूषणसारे धात्वर्थनिर्णये 'आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता' इत्यादिकारिकाया व्याख्यानप्रसङ्गे क्रियाविशेषणानां कर्मत्वस्यैव समाख्यानं कृतम्। तट्टीकयोर्दर्पणकाशिकयोश्च प्रणेतृभ्यां हरिवल्लभहरिदीक्षिताभ्यां तत्साधु समर्थितञ्च। यथोक्तं वैयाकरणभूषणसारे 'एवं फलांशोऽपि धातुनासत्त्वावस्थापन्न एवोच्यते, अत एव स्तोकं पचतीतिवत् स्तोकं पाक इत्युपपद्यते' इति। तट्टीकायां दर्पणे च 'अन्यथा तादृशप्रयोगानुपपत्तिः, तादृशफलस्य वाच्यत्वे तु तस्य व्यपदेशिवद्भावेन स्वसम्बन्धितया कर्मत्वात् तत्समानाधिकरणस्तोकादिशब्देभ्यो द्वितीयोपपत्तिः' इति। एवञ्च नव्यैर्वैय्याकरणैरपि क्रियाविशेषणस्य कर्मताया विषये प्राचामेव वैय्याकरणानां सरणिः शरणीकृतेति निःसंशयं समभ्यूहनीयम्। तदिदमखिलैर्वैय्याकरणैरैकमत्येन समभ्युपगम्यमानं क्रियाविशेषणानां कर्मत्वं कया रीत्या निष्पद्यत इति सम्प्रसृतायां विचारणायां चतुर्भिः प्रकारैस्तत् साधयन्ति वैय्याकरणसिद्धान्तरहस्यवेदिनो विपश्चितः।

ननु कर्मत्वस्य कारकत्वव्याप्यतया कारकत्वाभावे कर्मत्वस्याप्यनुपपद्यमानत्वेन क्रियाविशेषणे पूर्वं कारकत्वमेवोपपादनीयम्। कारकत्वञ्च क्रियाजनकत्वरूपं फलस्य व्यापारजनकत्वाभावेन तस्मिन् दुःसाधं दूरे तद्विशेषणरूपे क्रियाविशेषणे तस्य साधनप्रत्याशा इति चेत्, श्रूयताम्—यथा हि सम्प्रदानस्यांसन्निधाने 'मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत्। दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक्।।' इत्युक्तप्रकारकसम्प्रदानस्थले च सम्प्रदाने व्यापाराभावेऽपि स्वज्ञानपूर्वकालत्वेन क्रियाजनकत्वं स्वीक्रियते, तथा फलस्यापि स्वज्ञानपूर्वकालत्वेनैव क्रियाजनकत्वमाश्रयणीयम्।

अयमभिप्रायः—यथा हि यागस्य स्वर्गाव्यवहितपूर्वकालवृत्तित्वाभावेऽपि परमापूर्वद्वारा स्वर्गजनकत्वं मीमांसकैरङ्गीक्रियते तथासन्निहितसम्प्रदानस्थलेऽपि विषयविधया असन्निहितसम्प्रदानज्ञानजन्यं यदसन्निहितसम्प्रदानविषयकं ज्ञानं तज्ज्ञानक्रियाव्यवहितपूर्वकालवृत्तित्वादसन्निहितसम्प्रदानस्यापि क्रियाजनकत्वमभ्युपगमनीयमेव। न हि सम्प्रदानज्ञानं विना दानक्रिया सम्पद्यते, न च ऋते सम्प्रदानरूपाद् विषयात् सम्प्रदानज्ञानं जायते, ज्ञानस्य विषयतानियतत्वात्। तत्र च यथा स्वज्ञानद्वारा सम्प्रदानस्य दानक्रियानिष्पादकत्वं तथा फलस्यापि स्वज्ञानद्वारा व्यापारजनकत्वमुपकल्पनीयम्।

प्रथमं फलज्ञानम्, ततः फलेच्छा, ततस्तदुपायान्वेषणम्, ततस्तदुपाये फलसाधनताज्ञानम्, तत उपायेच्छा, तत उपायनिष्ठसाध्यत्वाख्यविषयताका प्रवृत्तिरित्येवं क्रमेण फलस्य क्रियाजनकत्वमस्त्येवेति असन्निहितसम्प्रदानादेरिव फलस्य कारकत्वं निर्बाधम्। इदमेव व्याहारि लघुशब्देन्दुशेखरे कारकप्रकरणे 'कारके'[१] इति सूत्रे नागेशभट्टेन 'असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वावश्यकत्वेन स्वज्ञानपूर्वकालत्वेनैव जनकत्वम्। एवं स्तोकं पचतीत्यादौ फलस्यापि' इति। इत्थञ्च फलस्य कारकत्वे निष्पन्ने तद्विशेषणरूपे क्रियाविशेषणेऽपि तन्निष्पद्यत एवेति न क्रियाविशेषणानां कारकत्वे बहु विवदनीयम्।

सम्प्रति क्रियाविशेषणानां कर्मत्वोपपादनमवशिष्यते विधातुम्। तच्च चतसृभिः प्रणालीभिर्वैय्याकरणाः समाचरन्तीति समभिहितमधस्तादनुपदमेवास्माभिः। ताश्च प्रणाल्यो यथा—फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात्तस्य कर्मत्वमित्येका। पच्यादेर्विक्लित्त्युत्पत्त्यनुकूलव्यापारादिरर्थ इति विक्लित्त्यादेः फलस्यापि उत्पत्तिरूपफलाश्रयत्वेन कर्मत्वमिति द्वितीया। विधेयतावच्छेदके अपूर्वबोध्यत्वाविशेषाद् विधेयत्वस्वीकारवद् इच्छोद्देश्यतास्वरूपफलतावच्छेदकस्य विक्लित्तित्वादेरपि इच्छोद्देश्यत्वेन फलत्वस्वीकरणात् तन्निष्ठेच्छीयोद्देश्यतावच्छेदकतावच्छेदकसमवायादेरपि फलतावच्छेदकत्वात् तेन सम्बन्धेन विक्लित्तित्वादिरूपफलाश्रयत्वाद् विक्लित्त्यादेः फलस्य कर्मत्वनिष्पत्तिरिति तृतीया। फलस्य साध्यत्वसम्बन्धेन व्यापारेऽन्वयाङ्गीकारात् साध्यत्वनिष्ठसांसर्गिकविषयताया धात्वर्थव्यापारनिष्ठविशेष्यतानिरूपितत्वाद् धात्वर्थप्रयोज्यत्वे सति धात्वर्थनिष्ठविशेष्यतानिरूपितविषयताश्रयत्वरूपफलत्वस्य साध्यत्वे सत्त्वात्तदाश्रयत्वाद् विक्लित्त्यादेः फलस्य कर्मत्वमिति चतुर्थी।

तत्रादिमायाः प्रणाल्या अयमभिप्रायः—नूनं नास्ति फले फलशालित्वं तथापि व्यपदेशिवद्भावेन तु तत् समायात्येव। यथा हि अस्यापत्यमिरित्यादौ अशब्दस्य केवलस्य स्वतोऽदन्तत्वाभावेऽपि व्यपदेशिवद्भावेनादन्तत्वमाश्रित्य तत्र 'अत इञ्'[२] इति सूत्रेण इञ्प्रत्ययो विधीयते, तथात्रापि फलस्य स्वतः फलाश्रयत्वविरहेऽपि व्यपदेशिवद्भावेन फलाश्रयत्वस्वीकरणे न कोऽपि प्रसरति दोषः। न च घटितत्वघटकत्वयोरेव 'व्यपदेशिवदेकस्मिन्' इति परिभाषयातिदेशनात् फले फलाश्रयत्वातिदेशो दुःशकः कर्तुमिति वाच्यम्, स्वस्मिन् स्वघटितत्वेऽतिदिष्टे

---

१. पा.सू. १।४।२३। २. पा.सू. ४।१।९५।

घटितत्वसम्बन्धावच्छिन्नाधिकरणताया आर्थसमाजग्रस्तत्वात् तथा च घटितत्वसम्बन्धेन फले फलाश्रयत्वं निर्बाधम्।

ननु फलतावच्छेदकसम्बन्धेन फलशालिन एव कर्मत्वमूरीक्रियते, घटितत्वसम्बन्धश्च न फलतावच्छेदक इति घटितत्वसम्बन्धेन फलस्य फलाश्रयत्वस्वीकारेऽपि नेष्टसिद्धिरिति तु नाशङ्कितव्यम्, 'तुल्यास्यप्रयत्नं सवर्णम्'[1] इति सूत्रस्थभाष्यप्रामाण्येन घटितत्वघटकत्वयोरिव आश्रयत्वस्यापि व्यपदेशिवत्परिभाषयातिदेशाङ्गीकारात्। 'तुल्यास्यप्रयत्नं सवर्णम्' इति सूत्रे हि भाष्ये भाष्यकृता पूर्वपक्षिणः 'एवमपि अवर्णस्य सवर्णसंज्ञा न प्राप्नोति, बाह्यं ह्यास्यात् स्थानमवर्णस्ये'ति शङ्कायाः 'सर्वमुखस्थानमवर्णमेक इच्छन्ति' इति समाधौ विहिते एवमपि व्यपदेशो न प्रकल्पते 'आस्ये येषां तुल्यो देश' इति पूर्वपक्षिण आक्षेपस्य 'व्यपदेशिवद्भावेन व्यपदेशो भविष्यती'ति समाधानं कृतम्। एवञ्च स्वस्यापि स्वाश्रयत्वं व्यपदेशिवद्भावेन भाष्यकारस्य भगवतः समभिमतमिति स्पष्टमेव। तथा चात्रापि फलस्य फलाश्रयत्वं व्यपदेशिवद्भावेन तद्भाष्यप्रामाण्यादभ्युपगत्य फलस्य फलशालित्वेन कर्मतायाः स्वीकारे न किमपि प्रतिबन्धकमिति सुधीप्रवरैर्बोद्धव्यम्।

द्वितीयायाः सरणेस्त्वयं सारः—सर्वत्रैव पच्यादीनां धातूनां विक्लित्त्याद्युत्पत्त्यनुकूलव्यापारोऽर्थः स्वीक्रियते। यथा च पच्यादिधातूनां विक्लित्त्यादिः फलं तथा तदुत्पत्तिरपि फलमेवेति विक्लित्त्यादिरूपफलाश्रयत्वेन तण्डुलं पचतीत्यादौ यथा तण्डुलादेः कर्मत्वं तथा उत्पत्तिरूपफलाश्रयत्वेन विक्लित्तिरूपफलस्यापि कर्मत्वं समभ्युपगन्तव्यम्। एवञ्च सर्वत्रैव फलस्य उत्पत्तिरूपफलाश्रयत्वेन कर्मत्वात् फलस्य प्रातिपदिकत्वाभावेन तद्विशेषणीभूते स्तोकादिरूपक्रियाविशेषणे 'कर्मणि द्वितीया'[2] इति सूत्रेण द्वितीयान्तातायां न किमपि बाधकमिति बोद्धव्यम्।

तृतीयरीतेस्त्विदं तत्त्वम्—यथा हि विधेयतावच्छेदके अपूर्वबोध्यत्वाविशेषेण मीमांसकैर्विधेयत्वमङ्गीक्रियते, तथा इच्छोद्देश्यतास्वरूपफलतावच्छेदकस्य विक्लित्तित्वादेरपि इच्छोद्देश्यत्वाविशेषात् फलत्वमूरीकरणीयम्। तथा च तन्निष्ठेच्छीयोद्देश्यतावच्छेदकतावच्छेदकसमवायादेरपि सम्बन्धस्य फलतावच्छेदकत्वात् तेन सम्बन्धेन विक्लित्त्यादीनां विक्लित्तित्वादिरूपफलाश्रयत्वेन कर्मत्वाङ्गीकारे न किमपि प्रसरति दूषणमिति मन्तव्यम्।

---

१. तदेव–१।१।९। २. तदेव–२।३।२।

तुरीयशैल्यास्त्वयं भावः—साध्यत्वसम्बन्धेन फलस्य व्यापारेऽन्वयः स्वीकरणीयः, तथा च साध्यत्वनिष्ठसांसर्गिकविषयता धात्वर्थव्यापारनिष्ठविशेष्यता-निरूपिता सम्पद्यते। फललक्षणञ्च धात्वर्थप्रयोज्यत्वे सति धात्वर्थनिष्ठविशेष्यता-निरूपितविषयताश्रयत्वरूपं मन्तव्यम्। एवञ्च तादृशफललक्षणस्य साध्यत्वेऽपि सत्त्वात् साध्यत्वसम्बन्धस्यापि फलत्वात् तदाश्रयविक्लित्त्यादीनां फलाश्रयत्वेन कर्मता निर्बाधेति विचक्षणैर्वेदितव्यम्।

इत्थं चामीभिश्चतुर्भिः प्रकारैः फलस्य फलाश्रयतां प्रसाध्य 'कर्तुरीप्सिततमं कर्म'[१] इत्यनेन कर्मसंज्ञायां 'कर्मणि द्वितीया' इति सूत्रेण मुख्य एव कर्मणि क्रियाविशेषणस्थले द्वितीया समुपजायत इति सम्यक्प्रकारेण समवबोद्धुं शक्यते। इदञ्च क्रियाविशेषणानां कर्मत्वं न केवलं सकर्मकधातुस्थल एव; किन्तु आस्ते शेते इत्यादावकर्मकधातुस्थलेऽपि भवत्येव। अत एव 'स्तोकमास्ते, सुखं स्वपिति' इत्यादयः प्रयोगाः सम्पद्यन्ते। अकर्मकधातूपस्थाप्यफलाश्रयत्वस्यापि व्यपदेशिवद्भावादिभिः फले सुसाधत्वादिदमुचितम्। कर्तुस्तु तत्र फलाश्रयत्वेऽपि कर्तृसंज्ञया कर्मसंज्ञाया बाधान्न कर्मत्वम्। क्रियाविशेषणस्थले तु बाधिकायाः कस्याश्चन संज्ञाया अप्राप्तेर्व्यपदेशिवद्भावादिभिः फले फलाश्रयत्वमुपकल्प्य तस्य कर्मसंज्ञायां न किमपि बाधकम्। तादृशकर्मणा अकर्मकधातूनां सकर्मकत्व-व्यवहारस्तु नापादनीयः, तस्य सर्वत्रैव सम्भवेन अकर्मकत्वव्यवहारस्यैव समुच्छेदापत्तेः। 'लः कर्मणि च भावे चाकर्मकेभ्यः'[२] इति सूत्रे कर्तृसाहचर्येण धात्वर्थे भेदान्वयि कर्मैव कर्मशब्देन गृह्यते, तेन क्रियाविशेषणरूपकर्मणि न कर्मणि लकारापत्तिः, क्रियाविशेषणरूपकर्मणो धात्वर्थे फले अभेदेनैव सम्बन्धात्। 'कर्तृकर्मणोः कृति'[३] इति सूत्रेऽपि कर्तृसाहचर्येण तादृशमेव कर्म ग्रहीतव्यं तेन क्रियाविशेषणरूपकर्मणि कृद्योगे न षष्ठ्या अप्यापत्तिः। एतेन 'सुखमोदनं पचती'त्यादौ द्विकर्मकतापत्तिः, 'सुखं स्वपिति, सुखमास्ते' इत्यादावकर्मकाणां स्वप्यादीनां कर्मत्वस्यानुक्तिसहत्वम्, सुखादेः कर्मतास्वीकारे 'सुखमोदनः पच्यते, स्तोकमोदनः पच्यते' इत्यादौ सुखमिति द्वितीयानापत्तिः, 'सुखमोदनस्य पक्ता' इत्यादौ कृद्योगे ओदनस्येव सुखस्येति षष्ठ्यापत्तिः, सुखमिति द्वितीयानापत्तिश्चेत्यादयः क्रियाविशेषणस्य कर्मत्वस्वीकारे प्रतिपादिता दोषाः पूतिकूष्माण्डीकृता वेदितव्याः।

---

१. पा.सू. १।४।४९; २. तदेव–३।४।६९।

३. तदेव–२।३।६५।

न चैवं कर्मशब्दस्य व्युत्पत्तिद्वयकल्पनरूपं दूषणमत्र समापतति भवतामिति वाच्यम्, 'तत्प्रत्यनुपूर्वमीपलोमकूलम्'[१] इति सूत्रप्रामाण्येन तस्य दोषस्यात्राकिञ्चित्करत्वात्। प्रमाणानुरोधेन गौरवस्यापि 'प्रामाणिकं गौरवं न दोषाये'ति न्यायेनादूषकत्वाच्च। तस्मात् सकलदोषराहित्येन सूत्रवार्त्तिकभाष्यकारादिनिखिलप्रामाणिकजनपरिगृहीतत्वेन लाघवाच्च क्रियाविशेषणविभक्तिविषये वैय्याकरणानामेव सिद्धान्तः सर्वतो गरिष्ठः श्रेष्ठश्चेति सिद्धम्।



१. पा.सू. ४।४।२८।

# वैदिकबौद्धयोः समानः पन्थाः


## डॉ. हरिप्रसाद-अधिकारी

उपाचार्यः, तुलनात्मकधर्मदर्शनविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी




वैदिका बौद्धाश्चैकस्या एव भारतीयसनातनार्यपरम्पराया द्वे प्रधाने अङ्गे स्तः। एते द्वे ज्ञानधारे अनादिकालादेव सर्वलोककल्याणं कुर्वत्यौ प्रवहमाने स्तः। उभयोरेव समुद्गमस्थलं गन्तव्यञ्चैकमेवास्ति। दर्शनानां समुत्पत्तिर्मनुष्याणां स्वाभाविकजिज्ञासायास्तृप्त्यर्थं जाताऽस्ति। संसारदुःखसन्तप्तो मानव आदिकालादेव सृष्टिजीवेश्वरप्रभृतिरहस्यपूर्णविषयाणां रहस्यं जिज्ञासमानः सततं चिन्तनकर्मनिरतो बभूव। एतच्चेत्थं स्पष्टीकृतं केनापि विदुषा—

> सम्पूर्णाया दृश्यसृष्टेर्यद्भवेन्मूलकारणम्।
> तज्जिज्ञासा तदर्थञ्च प्रयत्नो दर्शनं स्मृतम्[१]।।

यद्यनया दृष्ट्या वैदिकबौद्धयोः पर्यालोचना क्रियेत तदा तयोरेकैव पृष्ठभूमिः समासादयितुं शक्यते। यतो हि द्वयोरेव चिन्तनधारयोः प्रवृत्तिर्दुःख-सन्तप्तजीवलोकसमुद्धारार्थं जाताऽस्ति। भगवतो बुद्धस्य करुणा—'इदं खो पन भिक्खवे दुःखं अरियसच्चं जन्मापि दुःखं, जरापि दुःखा, मरणमपि दुःखमथ च दुःख-दुःखसमुदय-दुःखनिरोध-दुःखनिरोधगामिनी प्रतिपत्' साक्षात्कारपुरःसरं सर्वजीवलोकसमुद्धाराय प्रवाहितेति विषयो न तिरोहितं विदुषाम्। एवमेव वैदिकर्षिकपिलस्य सांख्यदर्शनमाध्यात्मिकाधिदैविकाधिभौतिकदुःखानामात्यन्तिका-पघाताय प्रवृत्तमस्ति। अथ चेदं सांख्यदर्शनं बुद्धाविर्भावात् पूर्वमासीदिति शास्त्रपर्यालोचनेन सुतरां सिद्ध्यति।

द्वयोः समानाधारान्वेषणात् पूर्वमिदमवगन्तव्यं यदेतयोर्मध्ये बहवो मतभेदा अपि वर्तन्ते। मुख्यत आत्मेश्वरसृष्टिकर्तृत्वस्वतःप्रामाण्यनित्यताक्षणिकतादिविषयेषु

---

१. पाश्चात्त्यदर्शनम्, श्लोकमयम्, पं. त्र्यम्बक-आत्मारामभण्डारकरप्रणीतम्—प्रथमपद्यम्।

गभीरा परम्परागतमतभेदाः सन्ति। परमेते विभेदा चिन्तनक्षेत्रे वर्तन्ते, न तु व्यवहारदशायाम्। एतत्तुल्यविभेदा वैदिकदर्शनेषु न्यायवेदान्त-सांख्यादिदर्शनेष्वपि राजन्त एव। एवमेव बौद्धसम्प्रदायेषु हीनयान-महायान-सौत्रान्तिक-वैभाषिक-योगाचारमाध्यमिकेष्वपि दरीदृश्यन्त एव। अतः सैद्धान्तिकविरोधेनोभयोर्मूलधारयोः शाश्वतसम्बन्धस्यापाकरणं कर्तुं न शक्यते।

इदं तावत् प्रसिद्धं यद् बुद्धसमये वैदिककर्मकाण्डप्रपञ्चेन लोका उद्विग्नाः समभवन्। तस्मादेव ते जातिवादादिभेदविरहितं बुद्धमार्गमङ्गीकृतवन्तः।

गौतमबुद्धस्याविर्भावो वैदिकसंस्कृतिसम्पन्ने शुद्धोदनप्रासादे समजायत। शुद्धोदनसभायां वेदादिशास्त्रनिष्णाताः सुधियः शास्त्रचिन्तननिरता भवन्ति स्म। एतच्च तथ्यं प्रायः प्रथमशताब्द्यां समुत्पन्नेन बौद्धविदुषा स्वकीयबुद्धचरितमिति ग्रन्थे विस्तरेण विवेचितम्। ते च पण्डिताः सर्वगुणसम्पन्ना आसन्निति प्रमाणयत्यश्वघोषकविः। यथा हि—

विप्राश्च ख्याताः श्रुतशीलवाग्भिः
श्रुत्वा निमित्तानि विचार्य सम्यक्।
मुखैः प्रफुल्लैः चकितैश्च दीप्तै-
र्भीतप्रसन्नं नृपमेत्य प्रोचुः।।

एतेन कथनेन तदानीन्तना वैदिकाः सर्वे स्वार्थपरायणा आसन्निति समारोपः स्वतो निरस्तो जायते। तेषां वैदिकविदुषां वैशिष्ट्यं वर्णयँल्लिखति कविरश्वघोषः[१]—

एवं नृपः प्रत्ययितैर्द्विजैस्तैराश्वासितश्चाप्यभिनन्दितश्च।
शङ्कामनिष्टां विजहौ मनस्तः प्रहर्षमेवाधिकमारुरोह।।
प्रीतश्च तेभ्यो द्विजसत्तमेभ्यः सत्कारपूर्वं प्रददौ धनानि।
भूयादयं भूमिपतिर्यथोक्तो यायाज्जरामेत्य वनानि चेति।।

अस्मिन् प्रसङ्ग इदमप्यवधेयं यत् शुद्धोदनपुत्रः सिद्धार्थो यः परवर्तिकाले गौतमबुद्धनाम्ना ख्यातो बभूव, जननमरणरहस्यं जिज्ञासमानः सर्ववैभवपरिपूर्णं राजप्रासादं पत्नीं पुत्रञ्च विहाय तदानीन्तनतत्त्वचिन्तनपरायणानां मुनीनां

१. त्रय एव श्लोका बुद्धचरितस्य प्रथमसर्गे द्रष्टव्याः।

बहून् आश्रमान् जगाम। एतस्मिन्नेव क्रमे सांख्यदर्शनाचार्यस्याराडकलामस्याश्रमं प्राप्य तत्त्वविषयकान् बहून् प्रश्नान् समुपस्थापयामास। यथोल्लिखितमार्याश्वघोषेण[1] —

ततः शमविहारस्य मुनेरिक्ष्वाकुचन्द्रमाः।
अराडस्याश्रमं भेजे वपुषा पूरयन्निव॥

स चाराडो मुनिस्तत्त्वजिज्ञासवे सिद्धार्थाय सांख्यदर्शनाभिमतं रहस्यं समुपदिदेश[2]। तद्यथा—

इत्यराडो यथाशास्त्रं विस्पष्टार्थं समासतः।
तमेवान्येन कल्पेन धर्ममस्मै व्यभाषत॥

यद्यप्याश्रमाणां भ्रमणेन मुनीनां सङ्गत्या च सिद्धार्थस्य सन्देहनिवृत्तिर्न जाता, तथाप्येतत्सङ्गत्या तत्तत्त्वजिज्ञासा बलवत्तरा जाता। षड्वार्षिकं कठोरं तपस्तप्त्वा सञ्जाते तत्त्वसाक्षात्कारे मुनिनाऽराडकलामेन समुपदिष्टसांख्यदर्शनस्य स्पष्टः प्रभावः परिलक्षितः। विविधदुःखनिवृत्त्यर्थं सांख्यदर्शनं प्रवृत्तमिति लेखारम्भ एव सूचितम्। सांख्यदर्शनस्येदमादिमं सूत्रमस्ति—अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः। दुःखत्रयनिवृत्त्यर्थमेव सांख्याः पञ्चविंशतितत्त्वानां विवेचनं कुर्वन्ति। एवमेव बुद्धोपदेशा अपि चतुर्ष्वार्यसत्येषु दुःख-दुःखकारण-दुःखनिरोध-दुःखनिरोधमार्गात्मकेषु समवलम्बिताः सन्ति। अतः सत्स्वप्यनेकासु बाधासु वैदिकबौद्धानां चिन्तनसरणिरेकैवास्ति। गन्तव्यञ्चास्ति मोक्षाख्यमनिर्वचनीयतत्त्वं यत्र सर्वदुःखोपशमनं जायते। वैदिकमार्गविषये ब्राह्मणविषये च बुद्धस्य कीदृशं मतमासीदित्यवबोधाय धम्मपदस्य पद्यमिदमवगन्तव्यं समन्वयकाङ्क्षिभिः[3] —

वाहितपापोति ब्राह्मणो समचरियासमणोति वुच्चति।
पव्वाजप मत्तनो मलं तस्मा पव्वजितोति वुच्चति॥

येन स्वपापानि वाहितानि स ब्राह्मणोऽस्ति। यश्च सममाचरति सः श्रमणोऽस्ति। येन च चित्तमलमपवारितं सः प्रव्रजित इति कथ्यते। न केवलमेतदेवापि तु ब्राह्मणप्रशंसापि कृता भगवता बुद्धेन। यथा हि[4] —

---

१. बुद्धचरितम्, सर्गः १२, श्लोकः १।
२. तत्रैव ४५ तमं पद्यम्।
३. धम्मपद, ब्राह्मणवग्गो, श्लोक-६।
४. तत्रैव।

न ब्राह्मणस्स पहरेय्य नास्स मुञ्चेत ब्राह्मणो।
धी ब्राह्मणस्य हन्तारं ततो धी यस्य मुञ्चति।।

ब्राह्मणं कोऽपि न प्रहरेत्। ब्राह्मणोऽपि प्रहर्तारं न प्रहरेत्। ब्राह्मणप्रहर्तारं धिक्, तं प्रतिप्रहर्तारमपि धिक्।

यथा भगवता बुद्धेन ब्राह्मणानां सम्मानः कृतः, ब्राह्मणत्वञ्च गुणाधारितमिति स्वीकृतम्। एवमेव वैदिकपरम्परायामपि बुद्धो विष्णोश्चतुर्विंशत्यवतारेषु स्वीकृतः। कर्मकाण्डावसरे क्रियमाणसङ्कल्पारम्भेऽपि बुद्धावतारे इति पदं योजितम्। एतेनापि द्वयोः परस्पराश्रयत्वमन्योन्याश्रयत्वं वा सुतरां सिद्ध्यति।

अनया रीत्या वैदिकबौद्धयोरन्योन्याश्रयत्वमतिप्राचीनकालादेवाविच्छिन्नरूपेण प्रवहमानमस्ति। भविष्यत्कालेऽप्ययं सम्बन्धोऽनयैव रीत्या देदीप्यमानं स्थास्यति, नास्त्यत्र शङ्काया लेशमात्रमपि। सामान्यतो वैदिका बौद्धाश्चैतेषु विषयेषु समानं मतं धारयन्ति—(१) कर्मफलम्, (२) पुनर्जन्म, (३) मोक्षः/निर्वाणम्, (४) निर्वाणस्य मोक्षस्य वानिर्वचनीयता, (५) संसारस्य दुःखरूपत्वम्, (६) दानस्य/परोपकारस्य महत्त्वम्, (७) त्यागमहत्त्वम्, (८) अहिंसासत्यास्तेयादिसद्गुणानां पालनम्, (९) भोगनिन्दा, (१०) संसारस्य क्षणभङ्गुरत्वम्। भक्तेः स्वरूपमपि वैदिकबौद्धयोः प्रायः समानमस्ति। आचार्यशान्तिदेवानुसारमुपासनास्वरूपमित्थमस्ति—(१) वन्दनम्, (२) पूजनम्, (३) शरणगमनम्, (४) पापदेशना, (५) पुण्यानुमोदना, (६) बुद्धाध्येषणा, (७) याचना, (८) बोधिचित्तोत्पादः, (९) बोधिपरिणामना चेति। वैदिकपरम्परापोषकपुराणेषु च नवधा भक्तिरुपवर्णिता। यथा हि—(१) स्मरणम्, (२) कीर्तनम्, (३) पूजनम्, (४) पादसेवनम्, (५) अर्चनम्, (६) वन्दनम्, (७) दास्यम्, (८) सख्यम्, (९) आत्मनिवेदनमिति। एतेन साम्येनोभयोः पारस्परिकः सम्बन्धः प्राचीनतमो घनिष्ठतमश्चेति विज्ञातं भवति।

यद्यपि सिद्धान्ततो बौद्धाः कर्मकाण्डविरोधिनोऽनीश्वरवादिनश्चेति कथ्यन्ते, परं सम्प्रति सर्वत्रैव बौद्धमन्दिरेषु गोम्पा-स्तूपविहारादिषु च कर्मकाण्डप्रयोगाः प्राचुर्येणावलोकयितुं शक्यन्ते। एवमेव केचन विवेचका वैदिकानां प्रवृत्तिवादित्वं बौद्धानाञ्च निवृत्तिवादित्वं साधयितुमीहन्ते। तत्कृते बहूनि प्रमाणानि तर्काश्च समुपस्थापयन्ति[१]। त इदमपि प्रमाणयितुं यतन्ते यद् वैदिकेषु यन्निवृत्तिवादित्वमवलोक्यते तद् बौद्धप्रभावादेवेति।

---

१. बौद्ध धर्म के विकास का इतिहास—प्रो. जी.सी. पाण्डेय, भूमिकायाम्।

परं सप्तमशताब्द्यां समुत्पन्नेन वैदिकधर्मध्वजवाहकेनाचार्यशङ्करेण स्पष्टतो वैदिकमार्गस्यैव प्रवृत्तिनिवृत्तिलक्षणे प्रतिपादिते। यथा हि—'द्विविधो हि वैदिको धर्मः—प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च'[१]। एतेन वैदिकाः केवलं प्रवृत्तिवादिन इति कथनं न तावत्सत्यसंवलितं प्रतीयते। एतत्तावद् वक्तुं शक्यते यत् प्रारम्भिककाले बौद्धाः केवलं निवृत्तिपरायणा बभूवुः। गार्हस्थ्यविषये न तावच्चिन्तितं बुद्धेन यावद्धि संन्यासविषये विवेचितम्। परं परवर्तिकाले बौद्धैरपि गार्हस्थ्यमहत्त्वमुररीकृतम्। भिक्षुणीनां सङ्घोऽपि निर्मितः। मध्यकाले भारतवर्षे बौद्धसिद्धान्तह्रासे तत्र गृहस्थाश्रमोपेक्षापि महत्त्वपूर्णं कारणमिति वक्तुं शक्यते। एवमेव वैदिकानामियं मान्यतापि शनैः शनैः क्षीणतरा जाता यत् पुत्रोत्पत्तिं विना नरकान्मुक्तिर्न जायत इति। अतो निष्कर्षरूपेणेदं वक्तुं शक्यते यद् वर्तमानसमये द्वयोरेव (वैदिकबौद्धयोः) प्रवृत्तिनिवृत्तिलक्षणं दृश्यते। अयमपि वैदिक-बौद्धयोः समन्वयहेतुर्भवितुमर्हति।

यद्यपि वर्तमानकाले कतिपये जनाः कलुषितमानसाः परस्परं विभेदमुत्पादयितुं कृतप्रयत्ना दृश्यन्ते, तथापि नाद्य ते सफलीभूताः। यतो हि पन्थानावेतौ कामक्रोधमोहादिविरहितैर्बुद्धबोधिसत्त्वमुनिभिः समाविष्कृतौ। एतयोः समुद्गमस्थलं गन्तव्यस्थलञ्चैकमेव। यथोक्तं केनापि विदुषा[२]—

अद्वैतवादस्य हि पूर्वभूमिं मन्येऽहमेतं ननु बौद्धवादम्।
अयुक्तमेवास्त्यनयोर्विरोधो यतः श्रुतिः सा जननी द्वयोर्हि॥

अत्रार्यसनातनशब्दविषयेऽपि चिन्तनीयम्। यतो हि शब्दावेतौ वैदिकबौद्धयोः शास्त्रेषु प्राचुर्येण प्रयुज्येते। वैदिकाः प्रायेण सनातनशब्देन वैदिकी परम्परा गृह्यत इति विश्वसन्ति। परं बौद्धशास्त्राणामनुशीलनेन तत्रापि सनातनशब्दस्य भूयान् प्रयोगो लब्धः। एतद्विषये बुद्धेनैवमभिहितम्—

नहि वेरेन वेराणि सम्मन्तीघ कुदाचनम्।
अवेरेण च सम्मन्ति एस धम्मो सनन्तनो॥

अतो निष्कर्षरूपेणेदं वक्तुं शक्यते यद् वैदिका बौद्धाश्चैकस्यामेव भूमौ समुत्पन्नाः, एतयोर्विकासः, समुन्नतिः, अवनतिश्च सहैव जाताः, जायन्ते च। एकमृतेऽपरं रिक्तमिव प्रतीयते। अतो हेतोर्दार्शनिकैः सामान्यजनैश्चैतद्विज्ञाय प्रवर्तितव्यमिति शम्।

---

१. श्रीमद्भगवद्गीताभाष्यस्योपोद्घातेऽवलोकनीयम्।
२. 'बौद्ध दर्शन और वेदान्त' प्रस्तावनायाम्।

अन्ते च—

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्।।
भवतु सब्ब मंगलं रक्खन्तु सब्ब देवता।
सब्ब बुद्धानुभावेन सदा सोत्थी भवन्तु ते।।



# विष्णुबलिसंस्कारः

**डॉ. वेदान्तं श्रीविष्णुभट्टाचार्यः**
वरिष्ठव्याख्याता
आलयसंस्कृतिः, राष्ट्रियसंस्कृतविद्यापीठम्
तिरुपतिः (आन्ध्र-प्रदेशः)



अस्यां भारतीयसंस्कृतिसम्प्रदायपरम्परायां मानवान् सुसंस्कर्तुमनेके संस्काराः स्मृतिधर्मसूत्रप्रयोगग्रन्थेषु उपदिष्टास्सन्ति। ते तावद् गर्भाधानादारभ्य अन्त्येष्टिपर्यन्तं वर्तन्ते। संस्कारेष्वेतेषु केचन गर्भसंस्काराः केचन शारीरकाः केचन अपरसंस्काराश्च। संस्कारस्तावद् द्विविधो वर्तते—ब्राह्मो दैव इति। तयो-र्ब्राह्मास्तावद् गर्भाधानादयः। पाकयज्ञ-हविर्यज्ञ-सोमयज्ञादयो दैवा भवन्ति। ऋषीणां सलोकतां समानतां सायुज्यं पदं गन्तुं मार्गभूता ब्राह्मसंस्काराः। देवानां सलोकतां समानतां सायुज्यं पदं गन्तुं मार्गभूता दैवसंस्कारा भवन्ति।

ब्राह्मसंस्कारेषु वैष्णवत्वसम्पादनाय उत्तमप्रपत्तेरङ्गभूततया गर्भाधानादिषु विद्यतेऽन्यः कश्चन विष्णुबलिसंस्कारः। अयं संस्कारस्तावद् वैखानसगृह्यसूत्रे बोधायनगृह्यसूत्रे अग्निवेश्यगृह्यसूत्रे च उपदिष्टो वर्तते।

विष्णुबलिसंस्कारस्यास्य स्वरूपं कीदृशमिति? इदानीं यथामति पत्रेऽस्मिन् मयाऽत्र परिशील्यते।

### संस्कारस्य आवश्यकता

ऋतुसङ्गमन-गर्भाधान-पुंसवन-सीमन्त-विष्णुबलीति पञ्चसंस्कारा गर्भ-संस्कारा भवन्ति। गर्भसंस्कारस्यान्तिमो विष्णुबलिसंस्कारः। वैखानसा अभिप्रयन्ति, गर्भरक्षणार्थम् आगर्भवैष्णवत्वसिद्ध्यर्थं गर्भचक्राङ्कणदीक्षासम्पादनार्थमष्टमे मासे अयं च संस्कारोऽवश्यमनुष्ठेय[१] इति।

गर्भोपनिषदि 'अष्टमे सर्वसम्पूर्णो भवतीति' उक्तरीत्या अष्टमे मासे मातृगर्भे विद्यमानः शिशुः सर्वाङ्गैः सर्वलक्षणसम्पन्नो भवतीति धिया तस्मिन्नेव मासे भगवतः

---

१. श्रीवैखानसमहिममञ्जरी।

स्थितिकारकस्य श्रीमहाविष्णोरनुग्रहसम्पादनार्थं प्रथमगर्भे विद्यमानाय शिशवे भगवच्छक्तिं प्रेषयन्ति अनेन संस्कारेण।

अष्टमे मासे पूर्वपक्षे पुण्ये नक्षत्रे सप्तम्यां द्वादश्यां वा तिथौ रोहिण्यां श्रावण्यां वा नक्षत्रे अयं संस्कारः करणीय इति अग्निवेश्य[१]-बोधायनगृह्यसूत्रयो[२]ः अस्य संस्कारस्य कालः प्रतिपादितो वर्तते।

**संस्कारप्रयोगः**

विष्वक्सेनं सम्पूज्य पुण्याहजलैः सर्वं सम्प्रोक्ष्य होमं हुत्वा गृहस्थः केशवादिद्वादशमूर्तीन् विष्णुना सह आवाह्य भगवद्विग्रहाणां स्नपनविधानेन स्नपनं कृत्वा अभ्यर्च्य विशेषविष्णुदैवत्यैर्मन्त्रैर्द्वादशाहुतिभिराज्यहोमं हुत्वा आज्यसंयुक्तं पायसं विष्णवे विनिवेद्य तेन होमः कार्यः। ततः ऋग्यजुस्सामाथर्वणैर्मन्त्रैर्वैष्णवैर्मन्त्रैश्च विष्णुं संस्तुत्य प्रणामैः पायसशेषं पत्नीं प्राशयेत्[३]।

विशेषेण सुदर्शन-पाञ्चजन्यमन्त्राभ्यामायुधौ द्वौ शङ्खचक्रौ अग्नौ तप्त्वा पायसे निक्षिप्य पायसं पत्नीं प्राशयेद् यजमान इति आनन्दसंहितायामुपदिष्टम्[४]। अनेन कर्मणा धन्यो भाग्यवान् गर्भवैष्णवो गर्भचक्राङ्कितः सुतो जनिष्यतीति[५], अयञ्च जनो मन्त्रसंस्कृतोऽपि भवेदिति स्पष्टमवगम्यते।

पाञ्चरात्रदीक्षोक्तवज्जननानन्तरं भुजाभ्यां तप्तचक्राङ्कणं निषिध्यते वैखानसग्रन्थे।

अनेन विष्णुबलिना वीर्यवत्तरः पुरुषो जन्यत इति बोधायन[६]-अग्निवेश्य[७]-गृह्यसूत्रयोर्विव्रियते।

**संस्कारफलम्**

सर्वकारणभूताय श्रियःपतये शेषभूतस्यास्य दासस्यानुसन्धानविधानमिति या वैदिकी उत्तमप्रपत्तिरस्ति तस्याः प्रतीकभूतः, नारायणायैव सर्वकालसर्वावस्थोचित-सर्वविधकैङ्कर्याणि स्युरिति भावनया सर्वकारणभूताय

---

१. अग्नि.गृ.सू. २.५.७; २. बो.गृ.सू. १.११.२।

३. श्रीवैखानसकल्पसूत्रम् (स्मार्तम् ३.१३); ४. दशमोऽध्यायः।

५. तत्सुतो भाग्यवान् धन्यो गर्भवैष्णवसंज्ञिकः।
अप्राकृतो महात्माऽसौ गर्भचक्रेण लाञ्छितः॥ (आनन्दसंहिता १० अध्यायः)

६. बो.गृ.सू. १.११.१४; ७. अग्नि.गृ.सू. २.५.७।

विष्णवे तुभ्यमिति भरन्यासप्रकारो यो भवेत् तस्य प्रमेयभूतः, महाविश्वासपूर्वक-मनन्यसाध्ये स्वाभीष्टे या शरणागतिर्वर्तते तस्या निदानभूतः, दिव्यायुध-दिव्यभूषण-दिव्यपरिजन-अप्राकृत-अमेय-सत्यकाम-सत्यसङ्कल्पत्वादिगुण-रूप-सौन्दर्यादिभिर्विराजमानस्य श्रीमहाविष्णोरर्चनाविधौ गुरुशिष्यपरम्परानुगतेन वैदिकविधानेन योग्यतासम्पादनार्थञ्च अयं विष्णुबलिसंस्कार उद्दिष्टो भवेदिति वैखानसग्रन्था[1] विस्तृततया प्रतिपादयन्ति।

**संस्कारमन्त्राः**

ॐ भूः पुरुष-
ॐ भुवः पुरुष-
ॐ सुवः पुरुष-
ॐ भूर्भुवस्सुवः पुरुष-
केशव-
नारायण-
माधव-
गोविन्द-
विष्णु-
मधुसूदन-
त्रिविक्रम-
वामन-
श्रीधर-
हृषीकेश-
पद्मनाभ-
दामोदर-
'आपोहिष्ठा'
'हिरण्यवर्णाः'
'पवमानस्सुवर्जनः'
'अतो देवा'
'विष्णोर्नुकं'

---

१. दशविधहेतुनिरूपणम्, वैखानसमहिममञ्जरी, आनन्दसंहिता।

'तदस्य प्रिय'
'प्रतद्विष्णुः'
'परो मात्रया'
'विचक्रमे'
'त्रिर्देवः पृथिवी'..............

वैखानस-अग्निवेश्य-बोधायनगृह्यसूत्रेषु त्रिषु इमे विष्णुबलिसंस्कारमन्त्रा एकरूपतया प्रतिपादिता इति वक्तुं नास्ति विप्रतिपत्तिः।

विष्णोरर्चनाविधौ अधिकारसिद्ध्यर्थमागर्भवैष्णवत्वसम्पादनार्थ-मुत्तमप्रपत्तेर्निरूपणार्थं शरणागत्या भगवतः प्राप्त्यर्थञ्च विष्णुबलिसंस्कारो वैदिकमार्गेण वैखानसकल्पसूत्रादिग्रन्थेषूपदिष्टो वर्तत इति।



# श्रीमद्भागवतदर्शने कार्यकारणभावविमर्शः

**डॉ. विन्ध्येश्वरीप्रसादमिश्रो 'विनयः'**
उज्जयिनीस्थविक्रमविश्वविद्यालयीयसंस्कृतप्राध्ययनकेन्द्रे
(स्नातकोत्तरसंस्कृतविभागे) उपाचार्यः



यः सृष्ट्वा जगदञ्जसाऽञ्जितदृशा तत्राविशल्लीलया
नानात्वं बिभराञ्चकार च पुनर्बिम्बात्मना भानुवत्।
यस्मिन् प्रोतमिदं प्रपञ्चपटलं सूत्रे यथा विद्रुमा-
स्तं श्रुत्यन्तसुरद्रुमं द्रुतिमतां चित्तेषु भान्तं नुमः॥१॥

यत्पादपङ्कजमरन्दमधुव्रतानां
नान्या रतिर्न च गतिर्भवतीह भूयः।
तं सृष्टिसर्जनविसर्जनपोषणानां
सत्कारणं धृतगुणं हरिमानमामः॥२॥

वेदान्तस्य तुरीयं प्रस्थानं यत्समन्वयेत्याख्यम्।
'रसभाष्यं' स्वोपज्ञं वेदव्यासस्य नैजसूत्राणाम्॥३॥

श्रीमद्भागवतं तत् पुराणरम्यं तथापि सच्छास्त्रम्।
परमरसं मधुकाव्यं भगवद्रूपञ्च नूयते नित्यम्॥४॥

करणं कारणं यच्चाकरणं कारणात्परम्।
सत्कार्यञ्चाप्यसत्कार्यमकार्यं तदुपास्महे॥५॥

अथाष्टादशपुराणेष्वन्यतमत्वेऽपि श्रीमद्भागवतं वेदान्तदर्शनस्य तुरीयं सर्वसमन्वयाख्यं प्रस्थानं, वेदान्तसूत्राणाञ्च स्वयं सूत्रकृद्भगवद्वेदव्यासेन बादरायणापरनामधेयेन सन्दृब्धं 'रसभाष्य'मित्यस्माभिः प्रमाणपुरस्सरं स्वीयेष्वितरेषु

प्रबन्धजातेषु[1] सविस्तरं प्रत्यपादि, सम्प्रति सम्प्रतिपाद्यतेऽत्र श्रीमद्भागवतदर्शनदृशा कार्यकारणभावस्य स्वरूपमिति विद्वद्भिः सानुग्रहं परामृष्टव्यम्।

तत्रास्तिकनास्तिकभेदेन द्विधा विभक्तेषु भारतीयदर्शननयेषु समासतश्चत्वारो वादा असत्कार्यवादसत्कार्यवादारम्भवादविवर्त्तवादाख्याः सुगतमतावलम्बिनां शून्यवादिनां, कपिलसिद्धान्तानुयायिनां सांख्यानामक्षपादपक्षपातिनां नैयायिकानां, केवलाद्वैतराद्धान्तमङ्गीकुर्वतां वेदान्तिनाञ्च पर्यायेण प्रथन्त इति सर्वसम्प्रतिपन्नोऽयं विषयो दर्शनारण्यसञ्चरणचणेषु विचक्षणेष्विति सूत्ररूपेणात्र दिङ्निर्देशस्तद्यथा माध्यमिकसम्प्रदायिनो बौद्धाः—

न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः[2]॥

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे।
सा प्रज्ञप्तिरुपादाय प्रतिपत् सैव मध्यमा[3]॥

इत्युक्तदिशा शून्यमेव परमतत्त्वमङ्गीकुर्वन्तस्तत एव प्रतीत्यसमुत्पादत्वेन वस्तुजातस्य सांवृत्तिकीं[4] सत्तां सङ्गिरन्ते। सांख्यास्तु—

असदकरणादुपादानग्रहणात्सर्वसम्भवाभावात्।
शक्तस्य शक्यकरणात्कारणाभावाच्च सत्कार्यम्[5]॥

इति पञ्चभिर्हेतुभिः कारणे पूर्वत एव सद्रूपत्वं कार्यस्य समाम्नासिषुः। अपि च, तार्किकाः कार्यकारणयोरत्यन्तं भेदमभ्युपगच्छन्त उत्पत्तेः प्राक्कार्यस्य कारणे प्रागभावं, तन्नाशे च तत्र ध्वंसाभावं मन्वाना आरम्भवादमभिप्रयन्ति। वस्तुतोऽयमप्यसत्कार्यवाद एव, परमाणव एव भावकार्यसमवायिकारणत्वमावहन्तः

---

१. (क) 'श्रीमद्भागवतप्रस्थाने प्रस्थानरत्नाकरे च शब्दप्रमाणस्वरूपविमर्शः' इत्यस्मिन् 'प्रस्थानरत्नाकरीयविद्वत्परिचर्चा'ख्यग्रन्थे प्रकाशिते निबन्धे (पृ.४५८-४८९, प्रकाशिका-श्रीवल्लभाचार्यट्रस्ट, कंसाराबाजार माण्डवीकच्छ, गुजरात)।

(ख) 'श्रीमद्भागवतदर्शनम्' इति सद्यः प्राकाश्यमानस्य बृहत्सन्दर्भस्य प्रथमेऽध्याये।

२. माध्यमिककारिका-१.७।

३. तत्रैव—२४.१८।

४. व्यावहारिकीं, तद्यथाऽऽहुः—व्यवहारमनाश्रित्य परमार्थो न देश्यत इति। (माध्यमिककारिका-२४.१८)

५. सांख्यकारिका, ९।

सृष्टिमारभन्त इत्यन्वर्थकत्वं पृथगभिधानस्यास्य। अथ शङ्करभगवत्पादपादानुयायिनः केवलाद्वैतवेदान्तिनः—

> अभेदिनो निर्विकृतेरनेकमृषास्वरूपान्तरदर्शकत्वम्।
> विवर्तशब्दार्थ इह प्रसिद्धस्तरङ्गभेदादिव चन्द्रभेदः[१]॥

इत्युक्तरीत्या रज्जोरविकृताया भुजङ्गाकारेणेव ब्रह्मणो जगदात्मना भानमात्रत्वात् 'एकमेवाद्वितीयं'[२] 'नेह नानास्ति किञ्चन'[३] इत्यादिश्रुत्यन्तवचनप्रामाण्यं पुरस्कुर्वन्तः, कारणस्य तत्त्वादप्रच्युतस्य कार्यात्मना विवर्तमानत्वमेव प्रथयाञ्चक्रुः। सौत्रान्तिकवैभाषिकयोः सुगतसाम्प्रदायिकयोः सङ्घातवादोऽप्यत्रानुसन्धेयो, बाह्यार्थानां क्षणिकत्वात्पञ्चस्कन्धानां सङ्घातस्यैव जगत्कारणत्वाङ्गीकारादिति वादसङ्क्षेपः।

श्रीमद्भागवते कार्यकारणसन्दर्भा विविधेषु प्रसङ्गेषु विप्रकीर्णा बहुधा च समुपलभ्यन्ते, यथा—

> कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रयाः।
> बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः[४]॥
> महत्तत्त्वाद्विकुर्वाणादहं तत्त्वं व्यजायत।
> कार्यकारणकर्त्रात्मा भूतेन्द्रियमनोमयः[५]॥
> कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः।
> भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्[६]॥
> कर्तृत्वं करणत्वञ्च कार्यत्वं चेति लक्षणम्।
> शान्तघोरविमूढत्वमिति वा स्यादहङ्कृतेः[७]॥

इत्यत्र कार्यशब्देन प्रायशोऽधिभूतं कारणशब्देनाध्यात्मं कर्तृशब्देन चाधिदैवतमभिप्रेयते[८]। सृष्टिनिरूपणप्रसङ्गे पौराणिकी पारिभाषिकशब्द-पद्धतिरियमन्यत्रापि पुराणेषु न शक्यानुसन्धाना[९]। किन्तु—

---

१. सङ्क्षेपशारीरके, २।६६;
२. छान्दोग्योपनिषदि, ६।२।१।
३. बृहदारण्यकोपनिषदि, ४।४।१९;
४. श्रीमद्भागवते, २।५।१९।
५. तत्रैव-३।५।२९;
६. तत्रैव-३।२६।८।
७. तत्रैव-३।२६।२६।
८. पद्येष्वेतेषु श्रीधराचार्यादिभिः कृताष्टीका अनुसन्धेयाः।
९. अव्यक्तं कारणं यत् तत्...... (श्रीविष्णुपुराणे-१।१९) इत्यादौ।

युक्तं न चित्रं त्वयि कार्यकारणे,
सर्वात्मनि व्यतिरिक्ते च वस्तुतः[१]।
कार्यकारणवस्त्वैकमर्शनं पटतन्तुवत्[२]।
नमो नमस्तेऽखिलकारणाय, निष्कारणायाद्भुतकारणाय[३]।

इत्यादौ दार्शनिकदृष्ट्यैव शब्दयोरनयोर्व्यवहारः कृतो भगवता भागवतकारेण, तथाप्यत्र कार्यस्य कारणयोश्च किं लक्षणं? कति भेदाः? ग्रन्थाभिमतसिद्धान्ते च का सङ्गतिरिति विस्पष्टमेकत्र निरूपितं च नोपलभ्यत एतस्य सर्गादिलक्षणनिबद्ध-पुराणकलेवरत्वाद् विविधकथाभिः साकं मुख्यतया श्रीमद्भगवल्लीलाना-माकरत्वादध्यात्मपारोक्ष्यपद्धतिमयत्वाच्चेति भूषणमेतन्न दूषणम्। टीकाकृद्भिश्च प्रायः स्वस्ववेदान्तप्रस्थानान्यनुसरद्भिः, श्रीमद्भागवतस्य स्वकीयं विवक्षितं, समन्वयपरमधिकारिभेदानुगुणं 'लीलोपात्तद्वैतोपलक्षितं केवलाद्वैतं' पृथक्प्रस्थानत्वेन न दर्शितमिति विनतवचनैरत्र कश्चन प्रयासो विधीयते।

ननु, श्रीमद्भागवतमेव प्रमाणपरमत्वेन स्वीकुर्वद्भिः श्रीवल्लभाचार्य-मतानुयायिभिः शुद्धाद्वैतिभिः, स्वीयेषु ग्रन्थेषु यत्कार्यकारणयोः स्वरूपं प्रत्यपादि तद्भागवतदर्शनस्यैवेति चेन्न, श्रीमद्भागवते नैकान्ततो वाल्लभस्य शुद्धाद्वैतस्यान्यस्य वा केवलाद्वैतविशिष्टाद्वैतद्वैताद्वैतादीनामेकतमस्यैव समर्थनं तत्र तत्र समेषां वेदान्तभेदानामास्तिकषड्दर्शनानामपि च नैकेषां, विशिष्य सांख्ययोगमीमांसादीनां यथाऽवसरमङ्गीकारात्, पुष्टिमार्गव्यतिरिक्तभिन्नभिन्न-सम्प्रदायाचार्यैः श्रीचित्सुखश्रीधरवीरराघवशुकसुधीरूपजीवगोस्वामिप्रभृतिभिः स्वस्वसम्प्रदायानुकूलतया पुराणशिरोमणेरस्य व्याख्यानात्, तत्कृतलक्षणादीना-मस्माभिरुपरिष्टान्निराकरिष्यमाणत्वाच्चेति नास्मदुपक्रमस्य गतार्थत्वम्।

श्रीमद्भागवतं वस्तुतः समेषामपि वेदान्तप्रस्थानानां सारं, ब्रह्मात्मैकलक्षणं कैवल्यैकप्रयोजनं शास्त्रम्; किन्त्वेतन्न नीरसं, परमरसात्मकत्वात्, पारमहंस्यज्ञानपरमपि न सत्कर्मोपास्तिनिरपेक्षं वैधीप्रेमलक्षणेति द्विविधभक्ति-सहचरित्वाच्चेत्यत्राधिकारिभेदाज्ज्ञानवद्भक्तेरपि मोक्षदातृत्वमथायमेवास्य शङ्करभगवत्पादाभिमतात्प्रस्थानाद् व्यतिरेको विशेषश्च, शिष्टमन्यत्सर्वं तदनुसारेणैव। उक्तमप्यत्रैव—

---

१. श्रीमद्भागवते-५।८।५; २. तत्रैव-७।१५।६३।
३. तत्रैव-८।३।१५।

सर्ववेदान्तसारं यद्ब्रह्मात्मैकत्वलक्षणम्।
वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम्[1]॥
सर्ववेदान्तसारं हि श्रीमद्भागवतमिष्यते।
तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित्[2]॥
श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं
यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते।
तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं
तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः[3]॥

अतः कार्यकारणभावोऽप्यत्र शाङ्करकेवलाद्वैतवत्पारमार्थिकव्यावहारिक-प्रातिभासिकरूपसत्तात्रयवैशिष्ट्यात्तत्र तत्र वैभिन्न्यं समश्नुते, अत्रापि केवलाद्वैतस्यैव प्रयोजनीयत्वात्, यथा—

एक एवाद्वितीयोऽभूत् (श्रीमद्भागवते, ११।९।१७)।
परावराणां परम आस्ते कैवल्यसञ्ज्ञितः।
केवलानुभवानन्दसन्दोहो निरुपाधिकः॥ (तत्रैव, ११।९।१८)
केवलात्मानुभावेन। (तत्रैव, ११।९।१९)।
कैवल्यं सात्त्विकं ज्ञानम्। (तत्रैव, ११।२५।२४)
कैवल्यैकप्रयोजनम्। (तत्रैव, १२।१३।१२)

सत्ताभेदस्योपलक्षकाः सन्दर्भा अप्यत्रावलोकनीयाः, यथा पारमार्थिकसत्तायाः सङ्केतो—'ब्रह्मैव भाति सदसच्च तयोः परं यत्' (श्रीमद्भागवते, ११।३।३७) इत्येवमादिषु वचनेषु। व्यावहारिकसत्तायाः—'न सूरयो हि व्यवहारमेनं तत्त्वावमर्शेन समामनन्ति'। (श्रीमद्भागवते, ५।११।१)। 'व्यवहृतये विकल्प इषितोऽन्धपरम्परया' (श्रीमद्भागवते, १०।८७।३६) इत्यात्मकेषु, प्रातिभासिकसत्तायाश्च—'अविद्यमानोऽप्यवभाति हि द्वयोर्ध्यातुर्धिया स्वप्नमनोरथौ यथा। (श्रीमद्भागवते, ११।२।३८)

---

१. श्रीमद्भागवते-१२।१३।१२; २. तत्रैव-१२।१३।१५।
३. तत्रैव-१२।१३।१८।

यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः।
नश्वरं गृह्यमाणञ्च विद्धि मायामनोमयम्।।
(श्रीमद्भागवते, ११।७।७)

स्वप्नो यथाऽऽत्मनः ख्यातिः संसृतिर्न तु वास्तवी।
(११।११।२)

इत्येतेष्वन्येषु च सन्दर्भेषून्नेतुं शक्यते। श्रीमद्भागवते कार्यकारणभावाभिव्यञ्जकानि कानिचन वचनानि—

स एवेदं ससर्जाग्रे भगवानात्ममायया। (१।२।३०-३१)
एकः सृजसि भूतानि भूतैरेवात्ममायया।।
आत्मन् भावयसे तानि न पराभावयन्स्वयम्।
आत्मशक्तिमवष्टभ्य ऊर्णनाभिरिवाक्लमः।। (२।५।४-५)
यथात्ममायायोगेन नानाशक्त्युपबृंहितम्।
विलिम्पन् विसृजन् गृह्णन् बिभ्रदात्मानमात्मना।।
क्रीडस्यमोघसङ्कल्प ऊर्णनाभिर्यथोर्णुते। (२।९।२६-२७)
त्वमेव भगवन्नेतच्छिवशक्त्योः सरूपयोः।
विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो यथा।। (४।६।४३)
अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्।
आत्मेश्वर उपद्रष्टा स्वयं दृगविशेषणः।।
आत्ममायां समाविश्य सोऽहं गुणमयीं द्विजः। (४।७।५१)
एकस्त्वमेव भगवन्निदमात्मशक्त्या
मायाख्ययोरुगुणया महदाद्यशेषम्।
सृष्ट्वाऽनुविश्य पुरुषस्तदसद्गुणेषु
नानेव दारुषु विभावसुवद्विभासि।। (४।९।७)

यो माययेदं पुरुरूपयाऽसृजत् (४।२४।६१)।
सकलजगत्कारणकारणभूतः (५।९।३८)।

युवां तु विश्वस्य विभू जगतः कारणं परम्।
इयं हि प्रकृतिः सूक्ष्मा मायाशक्तिर्दुरत्यया।
तस्या अधीश्वरः साक्षात्त्वमेव पुरुषः परः।। (६।१९।१२)

एकस्त्वमेव जगदेतदमुष्य यत्त्व-
माद्यन्तयोः पृथगवस्यसि मध्यतश्च।
सृष्ट्वा गुणव्यतिकरं निजमाययेदं
नानेव तैरवसितस्तदनुप्रविष्टः।। (७।९।३०)

त्वं मायया ऽऽत्माश्रयया स्वयेदं निर्माय विश्वं तदनुप्रविष्टः।
(८।६।११)

यो दुर्विमर्शपथया निजमाययेदं सृष्ट्व-(१०।४९।२९)।
यथोर्णनाभिर्हृदयादूर्णां सन्तत्यवक्त्रतः।
तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः।। (११।२०।२१)
यस्मिन्निदं प्रोतमशेषमोतं पटो यथा तन्तुवितानसंस्थः।
(११।१२।२१)

सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी।
सत्त्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्त ईक्षते।। (११।२२।१७) इति।

वचनेष्वेषु व्यावहारिकरूपेण जगतः कार्यत्वं, मायाशक्तिद्वारेणाद्वयात्मना भगवत एव कारणत्वमिति बुद्धिपथमारोढुं क्रमते, इममेव पन्थानमनुसरन्तष्टीकाकृतोऽपि व्याख्यानानि व्यधुस्तद्यथा—

'युक्तं न चित्रं त्वयि कार्यकारणे सर्वात्मनि व्यतिरिक्ते च वस्तुतः'। (५।१८।५) इत्यस्य 'भावार्थदीपिकायां' श्रीधरस्वामिनः—'यतो मायया सर्वात्मनि कार्यस्य कारणे स्रष्टरि कर्मयुक्तं वस्तुतः सर्वव्यतिरिक्ते निरुपाधावनावृतत्व-मकर्तृत्वञ्च युक्तम्'। अथ वीरराघवाचार्यो 'भागवतचन्द्रिका'याम्—'कार्यकारणरूपत्वञ्च न तादात्म्यनिबन्धनं किन्त्वात्मा देवो जात इत्यादितदन्तरात्मप्रयुक्तमित्याशयेन सर्वात्मनीत्युक्तम्। एवम्भूतेऽपि वस्तुतः प्रकृतिपुरुषाभ्यां विविक्तस्वरूपतो व्यतिरिक्ते साक्षात्कार्यत्वकारणत्वो-भयावस्थान्वयरहिते'।

'सिद्धान्तप्रदीप'कृच्छुकदेवस्तु—'कार्याणि महदादीनि तृणान्तानि तेषां कारणे पूर्वपूर्वरूपेण तज्जनके। प्रकृतिमधिष्ठाय महत्तत्त्वमुत्पादयति तदधिष्ठायाहङ्कारमित्येवमुत्तरोत्तरं बोध्यम्'।

विश्वनाथचक्रवर्त्यपि 'सारार्थदर्शिन्याम्', यथा—'मायायास्त्वच्छक्तित्वात् तत्कार्याणां कारणे, अत: सर्वात्मनि सर्वस्वरूपे मायाया: स्वरूपशक्त्याभावात्सर्वतो व्यतिरिक्ते चेति'।

तथाप्यत्र कार्यकारणभावस्य व्यवहारार्थमेव स्वरूपावस्थितिर्न पारमार्थिकीत्यपि सुतरां निरूपितमत्र मूले टीकाग्रन्थेषु च, यथा—'कार्यकारणवस्त्वैकमर्शनं पटतन्तुवत्' (७।१५।६३)। इत्यस्य मूलग्रन्थस्य व्याख्याने—'कार्यकारणयोर्वस्त्वैक्यस्य मर्शनमालोचनं तन्तुरेव न पट:' इति 'श्रीधरस्वामिवर्या:'। 'यत्कार्यकारणयोर्वस्तुनोरैक्यदर्शनं तद् भावाद्वैतं भावयो: कार्यकारणवस्तुनोरद्वैतम्' इति वीरराघवाचार्य:। 'कार्यकारणभेदस्यावस्तुत्वात् मिथ्यात्वादित्यर्थ:' इति गोस्वामिगिरिधरलालो 'बालप्रबोधिन्याम्'। 'विकल्पस्य कार्यकारणभेदस्यावस्तुत्वाद् हेतो: पटतन्तुवत् तन्तुरेव पट इतिवत् सर्वत्र कार्यकारणयोर्वस्त्वैक्यस्य दर्शनमालोचनं तद्भावाद्वैतमुच्यते' इति श्रीगङ्गासहाय: स्वकीयायाम् 'अन्वितार्थप्रकाशिकायाम्'।

अयमत्राभिसन्धि:—तात्त्विकदृष्ट्या नासत: कार्यस्योत्पत्ति: शक्यसम्भवा, तस्याविद्यमानत्वात्, न वा सतो विद्यमानत्वात्। न च साऽभिव्यक्तिमात्रं, तस्या अपि विद्यमानत्वेऽभिव्यञ्जनवैयर्थ्यापत्तेरसत्त्वेऽभिव्यञ्जनाशक्त्यत्वादिति श्रीमद्भागवते कार्यकारणात्मिकाया: सृष्टे: कल्पितत्वमेव, यथोक्तं तत्रैव—

तस्मादिदं जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणं पुरुदु:खदु:खम्।
त्वय्येव नित्यसुखबोधतनावनन्ते
मायात उद्यदपि यत्सदिवावभाति।। (१०।१४।१२)

मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि। (१२।२८।१३)

तस्माच्छ्रीमद्भागवतप्रस्थानमनुसृत्य—'व्यवहारे तज्जन्यत्वावभासकत्वे सति तत्तत्त्वानुसन्धानात्स्वाकारबाध्यत्वं कार्यत्वम्' इति कार्यस्य, 'व्यावहारानुगुणं स्वत: स्वेतरजन्यत्वप्रतिभासकत्वं कारणत्वम्'। इति कारणस्य च लक्षणं सङ्घाघटीति।

अयमस्याभिप्रायः—यावत् 'सर्वं खल्विदं ब्रह्म' इति न पारमार्थिकी बुद्धिस्तावदयं घटोऽयञ्च पट इति व्यवहारस्तत्रायं मृत्कुलालजन्योऽयञ्च तन्त्वादिजन्य इति मिथो विविक्तः प्रतिभासस्तत्त्वानुसन्धाने तु, योऽयं घटोऽसौ न घटस्तत्त्वतो मृदेव नायं पटस्तन्तुसङ्घात एवेति विनिश्चयात्तत्तत्प्रतीतेर्बाध इति लक्षणान्वितिः। अथ कारणत्वम्—

स्वता हि ब्रह्मापरपर्यायस्यात्मन एव भावः, 'आत्मावास्यमिदं सर्वम्'[1] 'तस्मान्न ह्यात्मनोऽन्यस्मादन्यो भावो निरूपितः'[2] इत्यसकृत् सिद्धान्तितत्वात्। स एवात्मा मायामाधाय स्वस्मिन् स्वकृतप्रपञ्चरूपकार्यस्योपादानत्वं निमित्तत्वञ्चारोप्य कारणत्वं कर्तृत्वञ्च धारयति—

'आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः'[3]। इत्यपि तत्रैव समाम्नातत्वात्। मायाऽङ्गीकारे तस्य स्वेतरजन्यानां जगदादीनां प्रतिभासकत्वं तदपेक्ष्यैव च कारणत्वव्यपदेशः, यथोक्तमत्रैव—

त्वय्यग्र आसीत्त्वयि मध्य आसी-
त्वय्यन्त आसीदिदमात्मतन्त्रे।
त्वमादिरन्तो जगतोऽस्य मध्यं
घटस्य मृत्स्नेव परः परस्मात्[4]॥

एकस्त्वमेव सदसद् द्वयमद्वयञ्च
स्वर्णं कृताकृतमिवेह न वस्तुभेदः।
(श्रीमद्भागवते-८।१२।८)

यथा हिरण्यं बहुधा समीयते
नृभिः क्रियाभिर्व्यवहारवर्त्मसु।
(श्रीमद्भागवते-१२।४।३१) इति।

इत्थं कारणत्वलक्षणसिद्धिः। अथ व्यावहारिकत्वमश्नुवदपि कारणत्वं चेदभिमतं तत् किंस्वरूपकं किम्प्रकारकमिति चेत्, ब्रूमः—

---

१. श्रीमद्भागवते-८।१।१०;  २. तत्रैव-११।२८।७।
३. तत्रैव-११।२८।६;  ४. तत्रैव-८।६।१०।

एकः स्वयं सञ्जगतः सिसृक्षयाऽ-
द्वितीययाऽऽत्मन्नधियोगमायया।
सृजस्यदः पासि पुनर्ग्रसिष्यसे
यथोर्णनाभिर्भगवन् स्वशक्तिभिः॥
(श्रीमद्भागवते-३।२१।१९)

यथोर्णनाभिर्हृदयादूर्णां सन्तत्यवक्त्रतः।
तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः॥
(श्रीमद्भागवते-११।९।२१)

सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः। (श्रीमद्भागवते-१२।८।४१)

इति ग्रन्थोक्तवचनप्रामाण्यान्मुण्डकश्रुत्युक्तदिशा[1]ऽत्राप्यभिन्ननिमित्तोपादानत्वमेव वेदितव्यम्। उपादानत्वमत्र—

यदुपादाय पूर्वस्तु भावो विकुरुते परम्।
(श्रीमद्भागवते-११।२४।१७)

इति ग्रन्थोक्तवचनविन्यासेनैव निष्कृष्यावगन्तुं शक्यते। अस्यायमर्थस्तावत्— यद्यन्मूलतत्त्वं, कारणत्वेन तदुपाधिना उपादाय स्वीकृत्य, मनसि समुपकल्प्य इति यावत्। पूर्वस्तु भावः कारणत्वकल्पनाभावः परं विकुरुते तज्जन्यकार्यत्वाकारेणावधारयति प्रमाता, तत्तस्य कल्पितकार्यस्योपादानकारणम्। श्रीमद्भागवतेऽस्य परमार्थदृष्ट्या विवर्तत्वं, व्यवहारदृशा तु परिणामित्वमित्युभयथाऽपि सङ्गमयितुं न दुःशकम्, यथा हि—

गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः।
पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत्॥
(श्रीमद्भागवते-३।१०।११)

इत्यत्र परमात्मनः कालरूपेण निमित्तता, पुरुष(चैतन्य)रूपेण चोपादानता लीलया मायया व्यपदिश्यते। एवमत्र ब्रह्मणो विवर्तोपादनत्वं सिद्धम्। विवर्तोपादानत्वं च स्वासमसत्ताककार्यजनकत्वं, यथा शुक्तेः रजतं प्रति तथा चात्र प्रपञ्चस्य ब्रह्मभिन्नसत्ताकत्वेन मिथ्यात्वाद् उपादानं शुद्धमद्वितीयं ब्रह्मेति निरवद्यम्।

---

१. यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति।
यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्॥ (मुण्डकोपनिषदि-१।१।७)

व्यावहारिकपरिणाम्युपादानत्वेऽपि प्रमाणमत्रैव—'प्रकृतिर्ह्यस्योपादानम्' इति। (श्रीमद्भागवते-११।२४।१९)

अनयैव दृष्ट्या तत्र तत्र श्रीमद्भागवते तृतीयस्कन्धादौ सृष्टिवर्णनं सांख्योक्तरीत्या नैयायिकाद्युक्तरीत्या वा न विसङ्गतिमुपैति। ततः—'माया मनः सृजति'। (श्रीमद्भागवते-७।९।२१) इति कथञ्चित्प्रधानकारणत्वम्।

चरमः सद्विशेषाणामनेकोऽसंयुतः सदा।
परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः।।

(श्रीमद्भागवते-३।११।१)

इत्यत्र,

'अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः।

(श्रीमद्भागवते-३।११।५)

इत्यत्र चारम्भवादो न न सार्थकत्वमावहतः। 'परिणाम'शब्दोऽप्यत्र रूपान्तरापत्त्यर्थकः—

कालाद्गुणव्यतिकरः परिणामः स्वभावतः।

(श्रीमद्भागवते-२।५।२२)

इत्यादावुपलभ्यमानो व्याख्येयः। वस्तुतस्तु लोकव्यवहारसिद्धविग्रहोऽयं कारणकार्यभावो मृद्घटयोरिव परिणामिपरिणामभावो मायाजगतोरेव, न तु जगद्ब्रह्मणोः। ब्रह्माश्रयानिर्वचनीयाविद्यापरिणामित्वाज्जगदपि मिथ्याऽनिर्वचनीयं वा, परिणामिपरिणामयोः समसत्ताकत्वात्।

अथ ब्रह्मणो निमित्तत्वमप्यौपाधिकं श्रीमद्भागवते तत्र तत्रावलोकयितुं न कठिनम्, यथा—

स एवेदं ससर्जाग्रे भगवानात्ममायया। (श्रीमद्भागवते-१।२।३०)
एकः सृजसि भूतानि भूतैरेवात्ममायया। (श्रीमद्भागवते-२।५।१८)
स वा एतस्य सन्द्रष्टुः शक्तिः सदसदात्मिका।
माया नाम महाभाग ययेदं निर्ममे विभुः।।

(श्रीमद्भागवते-३।५।२५)

एकस्त्वमेव भगवन्निदमात्मशक्त्या
मायाख्ययोरुगुणया महदाद्यशेषम्।
सृष्ट्वाऽनुविश्य पुरुषस्तदसद्‌गुणेषु
नानेव दारुषु विभावसुवद् विभासि।।
(श्रीमद्‌भागवते-४।९।७)

सृष्ट्वा गुणव्यतिकरं निजमाययेदं...। (श्रीमद्‌भागवते-७।९।३०)

त्वं माययाऽऽत्माश्रयया स्वयेदं
निर्माय विश्वं तदनुप्रविष्टः। (श्रीमद्‌भागवते-८।६।११)

यो दुर्विमर्शपथया निजमाययेदं
सृष्ट्वा गुणान् विभजते तदनुप्रविष्टः। (श्रीमद्‌भागवते-१०।४९।२९)

इत्यादौ सर्गादिकर्तृत्वं मायिकमथ च न पारमार्थिकमिति प्रतिपन्नम्। वस्तुतोऽत्र ब्रह्मणो मायोपहितरूपेण मायापरिणामात्मकवृत्तिद्वारेक्षितृत्वेनैव जगतो निमित्तकारणत्वम्।

अत्रेदमवधेयम्—ब्रह्मणो जगदाकारेण परिणममानाविद्याविषयत्वेनोपादानता निमित्तत्वं तु तदुपाधिमायावृत्त्याश्रयत्वेन सर्वतादात्म्येन साक्षाद् वेति मायोपहिताभिन्ननिमित्तकारणत्वं नासमञ्जसम्। तथ्यमिदं प्रथम एव ब्रह्मसूत्रगर्भिते मङ्गलपद्ये प्रत्यपीदद्‌भागवतकृद्‌भगवान् द्वैपायनर्षिः 'जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराडि'त्यत्र समाधिभाषया, तदेव चेत्थं प्राकाशि टीकाकृद्भिराचार्यैः—

'अनुवृत्तत्वात्सद्रूपं ब्रह्म कारणं मृत्सुवर्णादिवत्....तर्हि किं प्रधानं जगत्कारणत्वाद् ध्येयमभिप्रेतं नेत्याह, अभिज्ञो यस्तम्। 'स ईक्षत लोकान्नु सृजा इति। स इमाँल्लोकानसृजत्' इति श्रुतेः। 'ईक्षते नाशब्दम्' इति न्यायाच्च.....स्वतःसिद्धज्ञानः परमेश्वर एव जगत्कारणम्।' (इति श्रीधरस्वामिनः)

'तत्र भाव्यवस्थाविशेषवतः प्रागवस्थायोगित्वमुपादानं निमित्तत्वं नाम कर्तृत्वम्। एवञ्चात्र जगज्जन्मादिप्रत्युपादानत्वनिमित्तत्वोभयविधकारणत्वं ब्रह्मणो लक्षणं विवक्षितम्। ननु लोके मृत्कुलालयोर्विभिन्नयोरेवोपादानत्वनिमित्तत्वदर्शनात् कथमेकस्योभयविधकारणत्वमित्यत्राह—अन्वयादितरश्चार्थेष्वभिज्ञ इति। अर्थेषु कार्यभूतेषु देवमनुष्यादिष्वन्यादनुवृत्तेरुपादानत्वं व्यतिरेकादनन्वयात्प्रकृतिपुरुषाभ्यां

विलक्षणत्वेन तन्नियन्तृतया पृथगेवावस्थानान्निमित्तत्वं चैकस्य ब्रह्मण उपपन्नमित्यर्थः। कुलालस्यासर्वशक्तेर्घटादिषु मृत्कार्येष्वनन्वयान्नोपादानत्वमचेतनाया मृदस्तु व्यतिरेकाभावान्न न निमित्तत्वं ब्रह्मणस्तु प्रत्यक्षादिप्रमाणान्तरानवगतस्य केवलवेदान्तैकसमधिगम्यस्य.....उभयविधकारणत्वोपपत्तिरिति भावः'। (इति च श्रीवीरराघवाचार्यः)।

इत्थं श्रीमद्भागवतप्रस्थाने मायाविशिष्टस्यैव ब्रह्मणः कारणत्वं न शुद्धस्य। ब्रह्माश्रिता माया परिणामिकारणं, मायाविषयो जीवाश्रिताऽविद्याविषयो वा ब्रह्म, विवर्त्तोपादानं तत्र च ब्रह्मव्यतिरेकेणेतराभाव एव जगत इति कार्यस्य यावल्लक्ष्यकालमनवस्थितस्य तटस्थलक्षणत्वसङ्गतिः, निमित्तकारणताऽप्यत्र मायोपहितस्य तत्परिणामात्मकवृत्तिद्वारेक्षितृत्वेनेति पूर्वमेवोक्तम्। अतोऽत्र कार्यकारणतादिकं न पारमार्थिकमित्यवगन्तव्यम्।

नन्वसतोऽपारमार्थिकस्य कुतो ह्यर्थक्रियाकारित्वमथ च कथं व्यावहारिकत्वमिति चेत्, न, रज्जुकल्पितसर्पेणाप्यज्ञानदशायां भीत्या कम्पादिसद्भावदर्शनादिति न चारोपितस्य मिथ्याभूतस्यार्थक्रियाकारित्वायोगः। व्यावहारिकत्वमपि, यावद् व्यवहरणीयार्थाबाधस्तावत्पर्यन्तमबाध्यत्वेनाप्युपपद्यते, न हि सार्वकालिकाबाध्यत्वं व्यवहारायापेक्ष्यते, न च यत्र यत्र व्यावहारिकत्वं तत्र तत्राबाध्यत्वमिति व्याप्तिनियमः। अबाध्यत्वस्य च त्रिधात्वमिति वस्तुगतिः, प्रतीतिकालाबाध्यत्वेन व्यवहारकालाबाध्यत्वेन त्रैकालिकाबाध्यत्वेन च। आद्यं प्रातिभासिकसत्त्वं द्वितीयं व्यावहारिकसत्त्वं तृतीयञ्च पारमार्थिकसत्त्वमिति श्रीमद्भागवतेऽपि सत्तात्रैविध्यस्याभ्युपगमनमुक्तपूर्वमेव। अर्थक्रियाकारिताऽपि, प्रातिभासिके प्रवृत्तिपर्यन्ता, व्यावहारिके हानोपादानाभिव्यापिनी, पारमार्थिके तु वृत्त्यात्मिकाऽभिज्ञामात्रपर्यन्तेति विस्तरभिया नेह प्रतन्यते, श्रीमद्भागवते चास्य प्रमाणं, यथा—

छायाप्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिणः।
एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम्॥

(श्रीमद्भागवते-११।२८।५)

अत्र 'भावार्थदीपिका'कृत्स्वामिपादाः—'नन्वेवं सति देहादिभावानामप्यसत्त्वात्कथं भयहेतुत्वं तत्र सदृष्टान्तमाह—छायाप्रतिबिम्बः, प्रत्याह्वयः प्रतिध्वनिः, आभासः शुक्तिरजतादिः, एते यथाऽसन्तोऽप्यर्थकारिणो भवन्ति। आमृत्युतो

मृत्युमभिव्याप्य यद्वा मृत्युर्लयो यावन्नैव लीयन्ते तावत्पर्यन्तमित्यर्थः (भयादिजनकत्वमाबिभ्रत्येवेति शेषः)'। इति सर्वमनवद्यम्।

यत्तु, शुद्धाद्वैतवेन्दान्तविदुषा श्रीपुरुषोत्तमगोस्वामिना श्रीमद्भागवतं पुरस्कुर्वता—"कारणत्वञ्च चाविर्भावशक्त्याधारत्वम्। उपादानस्थं कार्यं या व्यवहारगोचरीकरोति सा शक्तिराविर्भाविका। आविर्भावश्च व्यवहारयोग्यत्वं तिरोभावश्च तदयोगित्वं ते द्वे यद्यपि भगवतः शक्ती.....तथापि भगवता विभज्य तत्र तत्र स्थापित इति तस्य तस्य तत्तदाविर्भावकत्वात्तत्तच्छक्तित्वमुच्यते तथात्वञ्चैकादशस्कन्धे उक्तम्—'अब्जयोनि'मुपक्रम्य 'विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वत्' इति कथनात्। एवञ्च व्यवहारे यत्र यदाविर्भाविका शक्तिस्तत्तस्य कारणं, यस्य च यतो व्यवहारयोग्यत्वं तत्तस्य कार्यम्"[1] इति लक्षणमुक्तमनयोः कार्यकारणयोस्तच्छ्रीमद्भागवताभिमतदर्शनदृष्ट्या युक्त्याऽपि च न विचारसहं, श्रीमद्भागवते शक्तिपदेन सर्वत्र मायायास्तद्गुणानां तद्बहुविधविच्छित्तीनाञ्चैवाभिप्रेतत्वादाविर्भावतिरोभावाख्यशक्तिद्वयस्य पृथक् सत्तानुपलम्भात्।

वाल्लभा मायां नाङ्गीकुर्वन्ति, कथञ्चिदङ्गीकारेऽपि तस्या मिथ्यात्वमनिर्वचनीयत्वं वा नैवाभ्युपगच्छन्ति। ब्रह्मवादिब्रुवा इमे जगदिदं सत्यं ब्रह्मस्वरूपं मन्वते, तथापि ब्रह्मणोऽद्वयत्वं सजातीयादिभेदराहित्यञ्च न निरासाञ्चक्रिरे। एतेषामस्मिन् राद्धान्ते आविर्भावतिरोभावयोः प्रक्रिया कथं प्रथत इति सोपपत्तिमुदाजहार सिद्धान्तपारदृश्वाऽन्यो विद्वान् श्रीबालकृष्णभट्टनामधेयः स्वकृत'प्रमेयार्णव'नामके ग्रन्थे—'भगवदिच्छायां कारणरूपायां मृदि विद्यमानस्य भगवद्रूपघटस्याविर्भावः, एवं सति यस्मिन् भगवद्रूपे रूपान्तरस्याविर्भावस्तत् कारणं, यथा मृद्, यस्य रूपस्य प्राकट्यं तत्कार्यं घट इति कार्यकारणव्यवस्था बोध्या'[2]। इति श्रीमद्भागवतप्रस्थानदृष्ट्या कक्षीकर्त्तुमशक्यत्वाद् वादोऽयं प्रतिविधीयते—

किं भोः! ब्रह्मसजातीयविजातीयस्वगतभेदरहितमिति भवन्तोऽप्यस्मद्रीत्यैवाभिप्रयन्ति न वा?

---

१. प्रस्थानरत्नाकरस्य प्रमाणपरिच्छेदे।

२. प्रमेयार्णवस्य प्रपञ्चभेदनाम्नि प्रकरणे, पृ.३।

'सजातीयविजातीयस्वगतद्वैतवर्जितम्'।

(वल्लभकृततत्त्वार्थदीपनिबन्धे, शास्त्रार्थप्रकरणे)

इति स्वाचार्यमुखेनैव निरूपणात्। अथाविर्भावतिरोभावनामशक्तिद्वयी कथमभ्युपगन्तुं शक्यते, तस्य ब्रह्मातिरिक्तसत्ताकत्वान्मायाऽनङ्गीकारे प्रातिभासिकत्वविरहितत्वात् तथात्वे च द्वैतापत्तेरवश्यम्भावित्वात्?

भागवते या शक्तिः सा मायात्मिकैव, भवदभिमता च सत्तात्मिका, सा च किं ब्रह्मणो विलक्षणा सलक्षणा स्वरूपान्तर्गता वेति? आद्यं न, विजातीयभेदस्वीकार्यत्वात्; द्वितीयमपि न, सजातीयत्वसम्पातात्; तृतीयमपि मतं च न, क्षोदक्षमं स्वगतभेदावहत्वादिति। अपि च, बृहत्त्वाद् बृंहणत्वाद्वेति 'ब्रह्म'-पदसङ्गतिः। भवन्मतेऽपि 'ब्रह्म व्यापकमव्ययम्'[1] इत्युच्यते। आविर्भावतिरोभावौ च सापेक्षिकत्वं, प्राकट्यनिलीनत्वधर्मसङ्गत्यर्थं स्वाश्रयाद् भिन्नत्वमपेक्षेते, तौ यदि ब्रह्माश्रितौ, कुतस्तदतिरिक्ताधारत्वं श्रयेताम्? सत्याधारे द्वैतदुर्ग्रहस्तदनङ्गीकारे च स्वरूपासिद्धिरित्युभयतःपाशा रज्जुः। किञ्च, यस्य कार्यस्य यत्र यस्मिन् क्षणे आविर्भावस्तस्मिन्नेव न तिरोभाव इत्यन्योन्याभावोऽवश्यमभ्युपेयस्तत्सर्वविधाभावं निराचिकीर्षुभिर्भवद्भिर्न शक्यमेतयोः सङ्गमनमिति भवदभिमतशक्तिद्वयी न मायातो व्यतिरिक्ता भ्रमरूपायास्तस्याः स्वीकार एव सर्वाक्षेपजालोच्छेदशक्यत्वादिति नः प्रतिपत्तिः। तस्मात्, 'कारणत्वमाविर्भावकशक्त्याधारकत्वमित्यादि भवदुक्तमलक्षणमिति प्रतीमः'[2]। अस्मन्मते तु ब्रह्मण एकस्यैव पारमार्थिकी सत्ता, सृष्ट्यादिकं मायिकमवस्तुभूतं, माया चौपचारिकदृष्ट्या शक्तिपदवाच्याऽपि न ब्रह्मणोऽतिरिक्तेति तद्द्वारेण कार्यकारणभावस्याप्यपारमार्थिकत्वमिति सुवचम्। पर्यन्ते समापनमङ्गलपद्यैरेभिः सम्पूर्यते श्रीहरिगुरुकृपोद्भावितो लघीयानयं सन्दर्भस्तद्यथा—

अब्धौ वारिपृषत्कवद् व्यधुरमी जीवाः पृथक्कल्पनां
यन्मायावशगाश्च संसृतिमये चक्रे क्रमन्तः पुनः।
कादाचित्कमथ प्रपत्तिपरमं लब्ध्वा महत्तत्क्षणं
यद् दृष्ट्यैव विदन्ति तत्त्वमखिलं तं ज्ञानमूर्तिं नुमः।।

---

१. तत्त्वार्थदीपस्य शास्त्रार्थप्रकरणे।

२. द्रष्टव्योऽत्र—''प्रस्थानरत्नाकरनिरूपितकरणकारणसामान्यस्वरूपस्य 'श्रीमद्भागवतप्रस्थान'-दृष्ट्या परीक्षणम्'' इत्यस्माभिर्वाल्लभविद्वद्गोष्ठ्यां पठितः, तत्सङ्ग्रहे प्रकाशनार्थं स्वीकृतश्च निबन्धः।

शास्त्राब्धिमन्थाचलविग्रहाणां तत्त्वामृतोल्लाससुधाधराणाम्।
श्रीनिश्चलानन्दमहेश्वराणां[१] जयन्ति पादाब्जमरन्दरेणवः॥

वृन्दाविपिनविहारं व्रजजीवनमिन्द्रनीलमणिहारम्।
ध्यायेन्नन्दकुमारं सुखसारं वल्लवीनयनतारम्॥ इति।



१. पूर्वाम्नायगोवर्द्धनमठपुरीपीठाधीश्वरशङ्कराचार्यवर्याणामस्मत् पूज्यपादगुरुवर्याणामित्याशयः।

# किं तावत् काव्यतत्त्वम्

**प्रो. रेवाप्रसादो द्विवेदी**
निदेशकः
कालिदाससंस्थानस्य
२८ महामनापुरी, वाराणसी



यस्य हि विश्वजनीनो व्याहारः 'काव्यं काव्य'मिति, 'पोएट्री पोएट्री'ति, 'शायरी शायरी'ति तस्यास्य किं नु स्वालक्षण्यमिति प्रश्ने भारतीयानामाचार्याणां यान्युत्तराणि तेषामेतावन्मात्रमेव गात्रं यद् वाक्यात्मा शब्दविशेष एव काव्यमिति। वाक्यं शब्दबन्धविशेषस्य संज्ञेति शब्दस्य गुणपदार्थत्वेन काव्यस्यापि सप्तसु पदार्थेषु गुणपदार्थत्वमापद्यते। यच्चास्य वैशिष्ट्यं तत् स्वगतं स्वप्रतिपादितार्थगतञ्चेति द्विविधं साकल्येन। तत्र—

**स्वगतम्**

स्वगतं वैशिष्ट्यं वर्णस्वालक्षण्यगतं वर्णविन्यासगतञ्च। तत्राद्यं वृत्तिरिति परिभाष्यते। कोमला परुषा चेत्यादिस्तस्याः संज्ञा। कोमलत्वं परुषत्वं च वर्णगतौ विशेषौ। तौ हि गुणपदव्यपदेश्यौ।

यच्च विन्यासगतं वर्णवैशिष्ट्यं तस्यानुप्रास इति, यमकमिति, श्लेष इति च संज्ञा। तस्यास्य वैशिष्ट्यस्यान्वयव्यतिरेकौ वर्णमात्रविन्याससह्याविति शब्दपरिवृत्तिमसहमानत्वेनानयोः शब्दैकाश्रितत्वं प्रतीमः।

**स्वप्रतिपादितार्थगतम्**

शब्दो हि ध्वनिरूपः। तस्य यश्चिद्गत आत्मा स स्फोटः। तत्रार्थेन सह सङ्केतग्रहः। अर्थस्याप्यर्थान्तरैः सम्बन्धः, तेषामप्यर्थान्तरैरिति तदिदं भगवत्याः प्रतिभास्वयम्प्रभाया गुहाभुवनम्। तदिदं गुहाभुवनं तादृशं यत्र प्रविष्टस्य न भवति प्रतीतिः कालस्य, न च स्फुरति मतिर्बहिरागमनस्य। समाधिमिव प्रविष्ट एषोऽनुभविता विश्वमपि विश्वोत्तीर्णत्वेन स्वदते, भुङ्क्ते, रसयति,

विगलितवेद्यान्तरश्च रमते, जायते चात्मारामोऽद्वयी। संवदत्यस्य चेतोधातुः कविवागुपस्थितेनाऽनुभवेन।

ये चाप्यर्थाः, एषामपि विशेषाश्चित्तवृत्तिरूपाः, ततश्चैषां सर्वेषां महासंज्ञा 'भाव' इति। अर्था अपि मधुरत्वेनोजस्वित्वेन च द्वैविध्यमाप्ता अनुभूयन्ते। एषां प्रतीतौ या स्फुटता तां 'प्रसाद' इति सङ्गिरन्ते प्राज्ञा आचार्याः। प्रसादत्वव्याप्यजातित्वमेव मधुरत्वौजस्वित्वयोः। त इमे त्रयो गुणाः—१. माधुर्यम्, २. ओज इति वैशेषिकौ द्वौ, सामान्यश्चैकः, ३. प्रसादः। अन्ये च सप्त गुणाः 'श्लेषः, सुकुमारता, अर्थव्यक्तिः, उदारत्वम्, कान्तिः, समाधिश्चेति'। त इम आ भरतमुनेरा च दण्डिनं प्रसिद्धाः। लावण्यमाभिजात्यमौचित्यं चापरे गुणा यान् वक्रोक्तिविद उदाजह्रुः। अत्र मम्मटादयो विप्रतिपद्यमानाः पण्डितराजादिभिरेव प्रतिक्षिप्ताः। काव्यगुणानां पृथगस्तित्वे किं मानमिति विप्रतिपत्तौ न ह्येव किमपीति केचिदातिष्ठन्ते, अनुभव एवेति तान् निराकृत्य प्रतिष्ठन्ते वामनाः, 'सन्ति केचित्र च भवन्ति केचिदिति सन्दिहानास्तिष्ठन्ति भामहादयः'। समासगता पदसंख्या, वर्णप्रकृतिश्चोपादानकारणत्वेनामनन्ति सम्मर्शिनो विज्ञा अत्र। सेयं काव्यार्थगताया गुणव्रज्याया गाथा। शब्दगता माधुर्यादयोऽर्थमाधुर्यादीनपेक्ष्यैव आत्मानं लभन्ते।

अत्रार्थयोजनागता विशेषाः। ते च सादृश्यादयः। विविक्ताः सङ्कीर्णाः, संसृष्टाश्च भवन्ति ते। ते चामी अलङ्कारपदस्य रूढ्या समाक्रान्ता वन्यपशुमात्रवाचको मृगशब्द इव हरिणमात्ररूढ्या। वस्तुतस्तु काव्यस्य सर्वेषामेव धर्माणां महासंज्ञैषा यदुतालङ्कारः। तत्र कारपदं स्वार्थकमेव ओङ्कारपद इव। अलमिति च यदवशिष्टं पदं तद्धि परब्रह्मवाचकतया प्रसिद्धमाग्नेये महापुराणे 'अक्षरं परमं ब्रह्म सनातनमलं विदुः' इत्येवम्। तच्च प्रकृते प्रेक्षकस्यात्मतत्त्वमेव। तदिदं तत्त्वं सर्वेषामेव काव्यधर्माणां जीवातुभूतम्। एवञ्च अलङ्कार इत्येषा महासंज्ञैवैका काव्यक्षेत्रे। पर्याप्तिरस्याः पर्यायः। अत एव च काव्यशास्त्रमिदमलङ्कारशास्त्रमिति व्यपदिश्यते। क्रियाकल्पादयः पुनरस्य दूरं विप्रकृष्टाः।

रूढ्या पुनरलङ्कारशब्द एष उपमादिविच्छित्तिपरः।

एतेषामेवास्पष्टो विन्यासो लक्षणनामा धर्मः।

एतेषामेव चयनं मार्गपदेन रीतिपदेन वा व्यपदिश्यते।

इदं चात्रावधेयं यद् अलङ्कारा इमे वाक्यधर्माः। नैते तथैव स्वप्नेऽपि भवन्ति वाच्या यथा रसा भावा वा। वाक्यार्थनामाकाङ्क्षामात्रभास्यतायाः सिद्धान्तिततत्वात्। यथा चैतत् तद् व्युत्पत्तिवादादिभ्यः सुखेनावसातुं शक्यम्। सेयमुक्तिव्रज्या काव्यस्य।

अथ ये तावदुच्यमाना अर्थास्तत्समवायजन्यप्रभावरूपाश्च येऽर्थास्ते रत्यादयोऽपि काव्यार्था एव, तेषामपि काव्यमात्रादेवोपलब्धेः। एषा चार्थजातिरन्तरङ्गा। अस्याः प्रतीतौ प्रमाणं भावनानामकः काव्यव्यापारः सहृदयतासतत्त्वः। रहस्यव्रज्येयं काव्यमात्रस्य। इमां प्रविष्टा भावकाः क्वचिदश्रूणि पातयन्ति, क्वचिद् दशनानि दर्शयन्ति, क्वचित् स्निग्धचेतस्कन्ति, क्वापि द्रुह्यन्ति, विस्मयन्ते, जुगुप्सन्ते च कुत्रचित्। इयमेव हि भुक्तिः। लोकोत्तरा ह्येव काव्ये सैषा, सामग्र्या अभावेऽपि पाकस्य सम्पत्तेः। सोऽयं विभावनाख्यो व्यापारो यत्र विश्वविधातापि विस्मयते। उत्पाद्यन्ते कमलानि जलमात्रगात्रे धात्रा। प्रतिपाद्यन्ते किन्तु तानि कविकर्मणा कान्तानां मुखपाणिपादादिरूपेणापि स्वैरम्। न च कुप्यति तत्र विश्वस्यास्य विधाता। विश्वमिदं भगवत्याः सूक्तिदेव्याः। अत्र प्रभवः स्फोटात्मा भगवान् शब्द एव।

अथापरं क्षेत्रं यत्र सर्वेऽप्युपर्युक्ता विशेषा अभिनयद्वारा प्राप्यन्ते, लभ्यते च रसः।

आम्। अस्ति तत्, किन्तु तत्र प्रभवत्वं भजति क्रिया, अनुक्रियात्मा। अनुक्रियया विभाविता ये भावाः सामाजिकसंवित्तिमारोहन्ति तेषामग्रिमा यात्रा काव्यवदेव सम्पद्यते, अयं तु विशेषो यदभिनये मञ्चादीनां द्रव्याणामपि भवति अभ्यर्हितत्वेनोपयोगः, काव्ये पुनः केवला भगवती वाग्देव्येव सर्वंसहचमत्कारायते विश्वविवर्त्तनासु दिव्यातिदिव्यासु। उक्तमिदमस्माभिरेव—

वन्दामहे पद्मदलाभिरूपां पञ्चप्रशाखीं कविनायकानाम्।
विवर्त्ततेऽर्थात्मतया स्वयं हि यामाश्रिता काचन सूक्तिदेवी।।

(स्वातन्त्र्यसम्भवस्य-२.१)

नाट्ये ह्याङ्गिकादयोऽपि भवन्त्यभिनयाः, काव्ये पुनरेक एव वाग्रूपः सः। एवं हि नाटकं व्यापकम्, काव्यं तस्यैकदेशः। सा च भिन्ना कथा यत् काव्यार्थोऽपि नाट्यायते।

वस्तुतस्तु आभ्यन्तर एव कश्चन व्यापारो यो हि नाट्यमिति च व्यपदिश्यते काव्यमिति च। अत एव महामुनेर्भरतस्यानुशासनं शाकुन्तलादिग्रन्थात्मना परिणतिमाप्तं यत् तस्य संज्ञा काव्यवेद इति यश्चास्य प्रयोगस्तस्य नाट्यमिति। परिणतिरियं चित्रमूर्त्यादिष्वप्यनुभूयते। अस्ति च तत्रापि परिणामो रसात्मक एव, किन्तु न भवति तत्र सृष्टिः शब्दमयी। ततश्च कलामात्रत्वमेव तेषाम्, न तु काव्यत्वम्।

अयमत्र निष्कर्षो यत् शब्दविशेष एव काव्यमिति व्यपदिश्यते। तस्य विशेषश्च बहुविधोऽपि ब्रह्मापरपर्य्यायभूतया केवलया अलङ्कार इति महासंज्ञयाऽभिधीयते। एवं चोच्यते—

आनन्दकोशस्योल्लासे लोकोत्तरविभावना।
अलङ्कृतार्थसंवित्तिः शाब्दी काव्यमितीष्यते।।[१] इति।

(काव्यालङ्कारकारिका-१)

चमत्कारजनकार्थप्रतिपादकशब्दत्वं काव्यत्वमिति च।

(रसगङ्गाधरे)



१. काव्यालङ्कारकारिकायां तु पाठः—'अलङ्कृतार्थसंवित्तिः कविता सर्वमङ्गले'ति। प्रकाशकः- कालिदाससंस्थानम्, २८, महामनापुरी, वाराणसी-५।

# अभिराजस्याभिराजता
## (मधुपर्णीमत्ता - मत्तवारणी - सन्दर्भे)

**डॉ॰ मनुलताशर्मा**
उपाचार्या, संस्कृतविभागस्य
काशीहिन्दूविश्वविद्यालये
वाराणसी



वाग्वधूट्या उत्सवकरा मृद्वीकारसमाधुरीझराः, श्रुतिसारगायननिर्भराः, मधुपर्णीमधुकराः, इक्षुगन्धागन्धवाहाः, चित्रविचित्रकथापर्णानां विकासकराः, मत्तवारणीबन्धनकराः, वैदेहीव्यथावर्णनकरा राङ्गडाख्याननिबन्धनतत्पराः प्रो. अभिराजराजेन्द्रमिश्रा अधुनातनकवनविधाविधानकुशलेष्वभिनवकविराजोडुगणेष्वनुपमप्रातिभप्रभाप्रभासितस्वान्ततयोडुराज इव राजमाना विद्योतन्तेतराम्। न केवलं त्रिवेणीतटवासित्वेनाऽपि तु मुक्तकखण्डमहाकाव्यनिर्माणात्, श्रव्यपठ्यदृश्यकाव्यविधानात्, गद्य-पद्य-गीतिगुम्फनात्, अष्टकशतकसहस्रकनिबन्धनात्, स्तुति-चरित-संस्कृतिसर्जनात्, नाटक-नाटिकैकाङ्किप्रणयनात्, सम्पादन-सङ्कलन-समीक्षणसमीक्षणात्, संस्कृतापभ्रंशदेशीभाषासु रचनाविधानात्, विविधानां त्रिवेणीनां कवनात् 'त्रिवेणीकवि'रिति विख्याताः **प्रो. अभिराजराजेन्द्रमिश्राः** कमनीयकवनीयकलाकौशलेन तथा कवन्ते यथा सुमनसां मनांसि रसत्रिवेण्यां सुतरां निमज्जन्ति।

प्रसन्नानां कान्तगुणेन मनोहारिणीनां नानाविधश्लेषनिपुणानां रमणीनामिव वाचां विलाससौभाग्यशालिनां हृदयस्पृशां सूक्तिरत्नानां रोहणशृङ्गमालिनां, सरसकाव्यकथाकथानकस्फीतगीतिनिर्मितिचणानां, वर्णनपठनगायनपटिष्ठानां, नूतनकवनीयविधाविधानविचक्षणानां सततसयत्नसमाराधितसुरभारतीनां, शास्त्राधीतिपरिपूतमतीनां मिश्राणां किं किं वर्णये येषामुच्चारणे स्पष्टता, स्वरे मधुरता, व्यवहारे कुशलता, कर्तव्यकर्मणि दक्षता, सज्जनेऽनुरक्तता, भव्येषु पक्षपातता, अनुशासने शिष्टता सर्वान् शिष्टान् प्रभावयति। एषां कण्ठे सरस्वती,

मतौ गणपतिः, मुखे गीष्पतिः, नये भृगुपतिः, बुद्धौ बुधः, शिष्टे सुधाकरः, दुष्टेऽङ्गारकः, सुधीसमागमे मित्रः, शत्रौ शनिः, अत एषां निसर्गसुन्दरो व्यवहारः कं जनं न रञ्जयति।

उत्तरप्रदेशस्य जौनपुरमण्डलवास्तव्यस्य श्रीमतो दुर्गाप्रसादादभिराजीदेव्यां जाताः, प्रयागविश्वविद्यालयतो लब्धशिक्षोपाधय हिमाचलविश्वविद्यालयस्य पूर्वसंस्कृतविभागाध्यक्षाः, निर्देशने पटवः, लेखने कुशलाः, भाषणे पेशलाः, प्राशासनिके चतुराः प्रो. मिश्रा अध्यापनेन विनेयानां चेतांस्यावर्जयन्त इदानीं **सम्पूर्णानन्दसंस्कृतविश्वविद्यालये** कुलपतित्वं विभूषयन्ति।

एतद्विनिर्मितं साहित्यं विशालं गम्भीरञ्च वर्तते। द्वे महाकाव्ये, त्रयोदश-खण्डकाव्यानि, षड्नवगीतानां सङ्कलनानि, अष्टौ एकाङ्किसङ्ग्रहाः, द्वे नाटिके, पञ्च कथासङ्ग्रहाः, एकं नाटकं प्रकाशितं जनमनांसि रञ्जयन्ति साहित्याम्बुधिं वर्धयन्ति च। एतदतिरिक्तं कतिपये शोधग्रन्थाः, पाठ्यग्रन्थाः, अनूदिताः सम्पादिताश्च ग्रन्था एतेषां कृतिगौरवं गम्भीरं कुर्वन्ति। एषामेवाभिनवां कृतिं मत्तवारणीं मत्तवारिणीव गतिशीलां स्वच्छन्दां (छन्दोनिर्मुक्तां) गलज्जलिकागीतिकासमन्वितामाश्रित्य मधुपर्णीञ्च समाश्रित्याहं स्वकं शोधपत्रं प्रस्तौमि। शोधपत्रेऽस्मिन् मयाऽभिराजस्याभिराजता 'मधुपर्णीमत्ता-मत्तवारणी'-सन्दर्भे सन्दृष्टा।

मत्तवारण्यां चतुष्षष्टिमिता गलज्जलिकागीतयो निबद्धास्सन्ति तथा शाखात्रिभिः मधुपर्णी द्वाविंशतिगलज्जलिकाभिः, अष्टाविंशतिगीतिभिः, अष्टादश-मुक्तच्छन्दोभिर्भूतैः पर्णैः पर्णायिताऽस्ति। उभयोरनयोर्निबद्धा रचना विषयभेदाद् इन्द्रधनुरिव विविधवर्णालङ्कृता मयूरपिच्छवच्चित्रविचित्राः, सप्तस्वरसम्भिन्न-सङ्गीतवत् कर्णरसायनाः, प्रपाणकरसवत् सुमनोमनोहरा विलसन्ति। आसु क्वचिद् दुर्नीतिकदर्थनम्, क्वचिद् नृपनयाऽऽलोचनम्, क्वचिद् विसङ्गतिनिरूपणम्, क्वचिद् जीवनवृत्तस्य सटीकं चित्रणम्, क्वचिन्नेतॄणां नग्ननिरूपणम्, क्वचित् सामयिकघटनानां सङ्घटनम्, क्वचित् कटाक्षः, क्वचित् प्रहारः, क्वचित् कशाघातः, क्वचित् शृङ्गारः, क्वचिद् विहारो गीतिषु मुखरिता अध्येतॄणां हृदयं स्पृशन्ति। शोधपत्रेऽस्मिन्नेतत् सर्वं सोदाहरणं प्रपञ्चितमस्ति। जीवनवीथिकासु विचरन्तः, प्रगतिसोपानपरम्परामुल्लङ्घयन्तः, नानाविधतिक्तकटुमधुराणामास्वादान् अनुभवन्तः, मत्तवारणीं मधुपर्णीञ्च गुम्फन्तः कवयः सङ्कलितासु आसु गजलगीतिषु विविधा भावधाराः प्रवाहितवन्तः। बहुविधा एतादृश्योऽनुभूतयः शब्दबद्धा अभूवन्,

या हृदयाघातजनितव्रणान् रेखाङ्कितान् कुर्वन्ति। ईर्ष्यालूनामसूयया, द्वेषिणां दाहेन, दुरभिमानिनां कटाक्षैः, विरोधिनां व्यङ्ग्यबाणैः, मत्सरिणां मात्सर्यैर्दंशिताः स्वरा अपि यत्र तत्र विकीर्णास्सन्ति। एते सर्वे सार्वजनीनवत् प्रतीयन्ते। प्रायेण दृश्यते लोके येषामुपकृतिं वयमाचरामः, त एव न जाने कथं वैरिणो भूत्वा प्रत्यपकुर्वन्ति, येऽस्माकं साहाय्येनाग्रेसरा भवन्ति, वृद्धिञ्चाप्नुवन्ति, त एव मार्गावरोधका भूत्वाऽभिमुखं पतन्ति, सप्रयासं यान् उत्थापयामः, त एव पृष्ठतः पादकर्षणं कुर्वन्ति, येषां हितचिन्तका भूत्वा सदा समर्थनं कुर्मः, त एव तक्षकीभूय दंशनं कुर्वन्ति। एतादृशान् अनुभवान् चित्रयन्ती 'तुदन्ति मामलम्' इत्याख्या रचनाऽसंशयं श्लाघनीयाऽस्ति।

ह्यो यदीयपादकण्टकाः समुद्धृता मया।
कण्टकीभवन्त एव ते तुदन्ति मामलम्।।
यद् गृहं निवारितं प्रदीप्तवह्नितो मया।
पावकीभवन्त एव ते दहन्ति मामलम्।।
स्वाशिषा प्रवर्धिताः प्रसह्य ये मया सदा।
तापसीभवन्त एव ते शपन्ति मामलम्।।
—तुदन्ति मामलम्। (मत्तवारणी, पृ. १२४)

अद्यत्वे स्पर्धामये युगे सरलजीवनपद्धत्याः स्वीकरणमसिधारायां चङ्क्रमणमिवातीव कठिनं वर्तते। अत्र विरुद्धासु धारास्वत्यवधानेन नौसञ्चालनं करणीयं भवति, विरुद्धाः पक्षा यथाकथञ्चित् साधनीया भवन्ति—

आर्जवं निष्फलं दृश्यतेऽस्मिन् कलौ
तच्छठे शाठ्यमेवैकमाश्रीयताम्।
गौरियं गर्भिणी सोऽपि गर्भी वृषः
चित्तमेवं विवादे द्वयोश्चीयताम्।। (मत्तवारणी, पृ. ११०)

जीवनमार्गस्तेषां कृते सरलो न भवति, येषां भाग्यपङ्क्तयः प्रबला न भवन्ति, न वा ये धनाढ्यकुलावतंसा न च प्रौढहितचिन्तकसहिता भवन्ति। वस्तुतः सत्यं त्विदमेव यद् जीवनं उषसः शारदीनशृङ्गार एव न, अपि तु अमातमिस्राया गहनवितानमप्यस्ति। इदं न केवलं मृगशावकानां सविस्रम्भं क्रीडास्थानं न वा शुकशावकानां कौतुकोद्यानमपि तु शृगालवृकव्याघ्राणां सम्पातस्थानमप्यस्ति। अत्र

यथार्थतायाः कठोरभूमौ दार्शनिकानां मान्यताश्चूर्णिता भवन्ति, आदर्शानां प्रासादाः पतिता भवन्ति। एतादृशानां वर्ण्यानामङ्कनं कुर्वन्ती 'सम्प्रतीक्षन्ते समुद्घाताः' इति शीर्षकेण रचिता कविता दर्शनीयाऽस्ति—

न जातश्श्रीमतां गेहे न ते घण्टापथः पन्थाः।
शनैर्गच्छाऽध्वनि त्वां सम्प्रतीक्षन्ते समुद्घाताः।।
निजं लीलातपत्रं संवृणु भ्रातस्त्वरय पादौ।
तवैव स्वागतार्थं भो समुत्था दारुणा वाताः।।
न चेदं जीवनं क्रीडाशुकानां कौतुकारण्यम्।
वसन्त्यस्मिन्निभृतनिभृतं तरक्षुव्याघ्रसङ्घाताः।।
यमाह्वयसे स्वरक्षार्थं सुभग कान्तारकोणेऽस्मिन्।
तदीयाः खड्गधारा एव पथिकालम्भने शाताः।।

—समुद्घाताः। (मत्तवारणी, पृ. १२०)

न केवलमिदमेव, जगदिदं मरुभूमौ वात्या इव, ध्रुवप्रदेशे सीत्कार-कारिशीतमिव, अफ्रीकायां निदाघदाहवद् भीषणझञ्झावातानां विपद्वात्याचक्राणां दारुणशराघातानां तीक्ष्णताया अनुभवं तान् एव कारयति, ये स्वभावतः सरलाः सन्मार्गगामिनः, छलप्रपञ्चादिरहिताश्च भवन्ति। महाकालिकां समाराधयितुं सिंहानां बलिर्न दीयते, दीयते तु तृणभक्षकानामजापुत्राणामेव—

समाजो बण्डभण्डानां निकामं चर्चरीं तनुते।
कलौ सकलाऽपि दुरवस्था कृपापथगामिनामेव।।
निहन्यन्ते न केसरिणो महाकालीं प्रसादयितुम्।
विपत्तिः केवलं छागीभुवां तृणजीविनामेव।।

—कृपापथगामिनामेव। (मत्तवारणी, पृ. १२२)

'पशुर्मया दृष्टः' नाम्नी रचना जीवनस्य विभिन्नेषु क्षेत्रेषु व्याप्तदुरवस्थासु दृष्टिपातं कुर्वाणा पशुताया बहुविधां कुरूपतां चित्रयति, यया देशः, समाजः, परिवारो व्यक्तयश्च कलङ्किता भवन्तः त्राहि त्राहीति निगदन्ति। बुभुक्षा-निद्रा-काम-क्रोध-लोभ-मोहादिभिरुद्विग्नोऽयं पशुर्भवेन्नाम मन्त्री विधायको वा, न्यायाधीशोऽपराधी वा, स्वजनसम्बन्धी नितान्तमपरिचितो वा, रेलयाने शायिकाविक्रेता भाटकसङ्ग्राहको भृतिग्रहीता शिक्षको वा, सर्वे पशव एव—

मानवीयाऽऽकृतिं दृढं पुष्णन्, अद्भुतोऽसौ पशुर्मया दृष्टः।
विश्वविद्यालयेषु सोत्कोचम्, शब्दमानः पशुर्मया दृष्टः॥
दुर्विपत्तिं विधाय सर्वेषाम्, साऽट्टहासः पशुर्मया दृष्टः॥
स्वार्थसिद्ध्यै स्वराष्ट्रसम्मानम्, हन्त पणयन् पशुर्मया दृष्टः॥
न्यायपीठं कलङ्कयन्ननयैः, सत्यभक्षी पशुर्मया दृष्टः॥

—पशुर्मया दृष्टः। (मत्तवारणी, पृ. १३८)

'रहस्यं साधु जानेऽहम्' इत्याख्यायां रचनायां सतामिवाऽऽचरतां शठानाम्, अवहित्थामाचरतां खलानाम्, सुहृदमिवाऽऽचरतां कलुषितचरित्राणां दुर्हृदाम्, आर्जवमाचरतां कुटिलानां, वञ्चकानां, राजनेतृणां रहस्योद्घाटनं कृतमस्ति—

कदाचित्सौधशृङ्गस्थोऽपि काको नैति तार्क्ष्यत्वम्।
न दोषो मृष्यते यत्नैः रहस्यं साधु जानेऽहम्॥
हृदिस्थं कालकूटं यन्निगूह्योद्गिरसि पीयूषम्।
प्रयतसे छलयितुं युक्त्याऽभिराजं तच्च जानेऽहम्॥
क्वचिद्रक्तः क्वचित्पीतः क्वचिद् वा कर्बुरः कृष्णः।
कथं कृकलासतामेषि व्रतन्ते तात जानेऽहम्॥
जितं त्वयका जगत्सर्वं यया कलया महामायिन्।
रहस्यं कृष्णवस्त्राणां त्वदीयं हन्त जानेऽहम्॥

—रहस्यं साधु जानेऽहम्। (मधुपर्णी, पृ. ३९)

'यशस्ते मयाऽवेक्षितं राष्ट्रबन्धो' इत्यभिधाना गजलगीतिरपि एतादृश्येव वर्तते, यत्र कलुषितचरित्राणां तेषां राजनेतृणां वर्णनं कृतमस्ति, येषां स्वरूपं प्रच्छन्नमपि स्फुटायमानं वर्तते। यथा समाचारपत्रे, दूरदर्शने, आकाशवाण्यां, पत्रपत्रिकासु, जनसभासु नेतृमहोदयानां तान्येव कृत्यानि—अतिशयोक्ति-विधयाऽतीवप्रशस्तानि विधाय प्रकाशितानि भवन्ति, परं तत्रैव तेषां कलुषितमपि किं किं कृत्यं कुत्र कुत्र कथं कथं भवतीत्यस्य सुस्पष्टं चित्रणं कुर्वन्ती गीतिरियं कर्णगोचरीकर्तव्या—

समाचारपत्रेषु क्लृप्तप्रकाशं यशस्ते मयाऽवेक्षितं राष्ट्रबन्धो!
समारोहसत्रेषु पूर्णावकाशं यशस्ते मयाऽवेक्षितं राष्ट्रबन्धो!

त्वया निर्मितो यः सरित्सेतुरासीत्
क्षतं विक्षतं तद्वपुर्जीर्णशीर्णम्।
तदीयेषु रन्ध्रेषु सर्पावभासं यशस्ते मयाऽवेक्षितं राष्ट्रबन्धो!

त्वयाऽऽरोपिता कर्गदे याऽऽम्रवाटी
गृहीत्वाऽर्थसाहाय्यमाप्तप्रभूणाम्।
चिरं कर्गदेष्वेव तस्यां फलन्त्यां यशस्ते मयाऽवेक्षितं राष्ट्रबन्धो!

त्वया कल्पिता राजमार्गा विचित्रा
न तेष्विष्टका नापि पाषाणखण्डाः।
तथाऽप्युत्थिते धूलिबिम्बे तदीये यशस्ते मयाऽवेक्षितं राष्ट्रबन्धो!

(मत्तवारणी, पृ. ९४)

सुरासुरनरनागदनुजदितिजादिभिर्निवासार्थं सततमभिलषणीयस्य विश्वम्भराभोगललामलीलायमानस्य भारतवर्षस्य कदाचिदासीद् धर्मराजादि-पृथ्वीराजान्तसत्यनिष्ठानां परिपूतचरितानां प्रजापालनपरायणानां नृपतीनां कृताधिष्ठाना इन्द्रप्रस्थाभिधाना नगरी राजधानी, या साम्प्रतं देहलीपदेनाभिधीयते। तत्राऽस्याः सर्वजनसम्मोहनकारिणी चञ्चच्चमत्कारिणी इदानीन्तनी काचिदभि-नवाऽद्भुता प्रभुता। तत्रत्यानां स्थितीनामतिरुचिरशैल्याऽङ्कनमकारि कविना 'राष्ट्रस्य राजधानी' इति नाम्ना गजलगीतेन यत् सद्यो हृदयं स्पृशति प्रत्यक्षञ्चानुभावयति यस्याऽनुभूतिः समाचारपत्रपत्रिकामाध्यमेनापि प्रतिदिनं क्रियते जनैः।

वयं जानीम आप्रपदादाचूडं जघन्यापराधेषु निमग्नाः, उद्दण्डाः, भयादोहकाः, साम्प्रदायिकोन्मत्ताः, विनिमयांशग्राहिणः, अवैधादानप्रदानादि-बहुविधेष्वनौचित्यकृत्येषु संलग्ना जना अस्यामेव राजधान्यां विभिन्न-राजनीतिकदलानां सदस्यभूताः सर्वोच्चसंसदः शोभां वर्धयन्तः स्वकीयकृष्णकृत्यान् धवलवस्त्रान्तरितां विधाय जनानां नेतृत्वमाचरन्ति, अत्यन्तमशिक्षिता ग्राम्या जना अपि जिह्वाचापल्याद् वाचाटा विभिन्नानां संस्थानानामध्यक्षतामपि निर्वहन्ति। आसां स्थितीनां सरसमङ्कनं विदधानाः काश्चन गीतिपङ्क्तयः श्रवणातिथित्वमानेयाः—

तनुते न विस्मयं किं राष्ट्रस्य राजधानी।
कुरुते न दुर्नयं किं राष्ट्रस्य राजधानी।।
का वा कथा तिलानां सिकताचयादपीयम्।
चुच्यति निकामतैलं राष्ट्रस्य राजधानी।।

रथ्याचरानलर्कान् संसदि विचित्य युक्त्या।
कण्ठीरवान् विधत्ते राष्ट्रस्य राजधानी।।

सुगमोष्ट्रसैरिभाणां वैशाखनन्दनानाम्।
कठिना परं गजानां राष्ट्रस्य राजधानी।।

ननु भोगिनां समृद्धा भोगावतीयमिद्धा।
धर्मस्य संयमनिका राष्ट्रस्य राजधानी।। (मत्तवारणी, पृ. ३६)

बहुविधैर्दशनैः, प्रहरणैः, कशाघातैश्छलनैर्वञ्चनैर्विश्वासघातैश्च सततं पीडितस्यापि कवेर्मनोबलं स्वल्पमपि न क्षीणं, विश्वासज्योतिरपि न घूर्णिता, सङ्कल्पसूर्योदयोऽपि नास्तङ्गतः, कण्ठस्वरोऽपि नावरुद्धः, आस्थाबन्धोऽपि न शिथिलीभूतः। अत एव कविता सहसा मुखरीभवति—

यात्रापथे प्रत्यूहनिचया हन्त के न समागताः?
गगनं तथापि चुचुम्ब मे बहुशो न किं वर्धिष्णुता।।

अन्यत्र,

नाहमस्मि सूर्यो दीपोऽहम्।
मनोराज्यनवधरणीपोऽहम्।।
सिन्धोरिव न च मे विस्तारः।
सर्वसुलभमृदुजलकूपोऽहम्।।
नन्दनवनसुरतरुरपि नाऽहम्।
घनच्छायजनपथनीपोऽहम्।।
अलमस्मि मम निष्ठापरीक्षया।
तनुमपि दास्यामि दिलीपोऽहम्।।

—दीपोऽहम्। (मत्तवारणी, पृ. १४०)

मत्तवारण्या गजलगीतय एतादृशमनेकविधं सन्देशमनायासतः प्रकाशयन्ति, यत्र कर्तव्याकर्तव्यविषये प्रौढा अनुभवसिद्धा च कविभावना सुस्पष्टत अभिव्यज्यते। यथा अज्ञाऽल्पज्ञगुणहीनानां जनानां प्रभुत्वे सति बुद्धिमता जनेन कीदृग् आचरणं करणीयमित्यस्मिन् विषये सुस्पष्टं कथितमस्ति कविवाण्या—

रुचिश्चेन्मानसावासे मनागपि मल्लिकाक्षाणाम्।
द्रुतं कारण्डवेभ्यस्तैर्निदेशाः सम्यगाप्येरन्।।

प्रशस्ते मरुवणे शाखोटकानामेव साम्राज्यम्।
क्षपैरन्यैस्ततस्तेषां प्रभावाः सीम्नि सह्येरन्।।

कुलायेष्वेषु मौकुलयस्सुखं तन्वन्ति सङ्गीतम्।
पिहितकण्ठैर्नु कलकण्ठैस्तदुद्देशाः प्रगृह्येरन्।।

कुविन्दानामयं ग्रामो दधत्तानो लसद्वानः।
बुधैरत्रागतैस्तच्छास्त्रचर्चाः स्वा निरुध्येरन्।।

—कस्मै खलु निवेद्येरन्। (मत्तवारणी, पृ. १०२)

'शनैः शनैः' नाम्न्यां गजलगीतिकायां मित्राणामनुरञ्जनविषये प्रीतिपादपानां संवर्द्धनविषये, वार्तारसानन्दविषये, गन्तव्यप्राप्तिविषये, अवधानेन व्यवहारविषये, स्वार्थपूर्तिविषये, हर्षोल्लासेऽपि संयमविषये, प्रीतिपल्लवनविषये, शत्रुशृङ्खला-कर्तनविषये, सत्यभाषणविषये बहुविधा उपदेशा सरसतयोपदिष्टाः—

प्रीतिक्षुपं विवर्धय बन्धो शनैः शनैः।
सुहृदां मनोऽनुरञ्जय बन्धो शनैः शनैः।।

मा त्वत्कृतेऽपि झञ्झाकौलीनमुद्भवेत्।
वाचस्समीरमीरय बन्धो शनैः शनैः।।

परितोऽपि पामराणां तृणशालिका इमाः।
होलानलं समिन्धय बन्धो शनैः शनैः।।

अभितो गभीरनद्यौ गिरिशृङ्खला पुरः।
यात्रामिमां समापय बन्धो शनैः शनैः।।

अज्ञातहृत्सु वैरीभवति स्मरोत्सवः।
हृदयं ततस्समर्पय बन्धो शनैः शनैः।।

परुषाऽऽयसी च नूनं सापत्न्यशृङ्खला।
प्रीत्यैव तां निकर्तय बन्धो शनैः शनैः।।

(मत्तवारणी, पृ. ३८)

एवं 'कथं भोः' इत्यत्रापि व्यतिरेकविधया सज्जनास्सन्दिष्टाः—

परेषां सृतिः कीर्णशूला कृता चेत्।
स्वमार्गे सुमं मार्ग्यते तत्कथं भोः।।

स्नुहीबर्बुरा रोपिताश्चेत्प्रयत्नैः।
रसालासवे गृध्यते तत्कथं भोः।। (मत्तवारणी, पृ. ७४)

'तदेव दिनं दिनम्' इति नाम्नी गजलगीतिस्तेषां क्षणानामवसराणां कार्याणाञ्चातिमनोरमं चित्रणं विदधाति यदा वयं 'जीवनस्य वास्तविकी सार्थकता केषु पलेषु वर्तते' इति चिन्तने व्यापृता भवामः। किं स्वजनपरिजनानां, पुत्रकलत्राणां, सम्बन्धिनां सुखसौविध्यसम्पादने व्यग्रतायामथवा बुभुक्षूणां भोज्यप्रदाने दुःखिनां साहाय्यं विधायाऽश्रुनिवारणे, परोपकारकरणे तत्परतायां वा। विषयेऽस्मिन् कवेश्चिन्तनं समवलोकनीयम्—

स्वसुखे न किं परिनर्तितं दुःखे न किं परिदेवितम्?
मुषितं परन्तु यदाऽश्रु ते नूनं तदेव दिनं दिनम्।।

प्रघुणोचितैः सम्माननैः कतिधा न चाऽहं सत्कृतः।
भिक्षुर्यदा पथि भोजितो नूनं तदेव दिनं दिनम्।।

स्वसुते मनस्सज्जितमिदं ननु निर्गुणेऽपि परं यदा।
प्रतिवेशितनयो लालितो नूनं तदेव दिनं दिनम्।।

प्रीत्या प्रसह्य छलेन वा सततं गृहीतं केवलम्।
दत्तं परन्तु यदा स्वकं नूनं तदेव दिनं दिनम्।।

—तदेव दिनं दिनम्। (मत्तवारणी, पृ. १३४)

'कार्गिलम्' इति शीर्षकेण रचिता गजलगीतिर्भारतीयेतिहासस्य तानि कृष्णपत्राणि उद्घाटयति यद्वशात् कश्मीरप्रदेशस्य प्रभूते भूमिभागे आतङ्कपरिपोषकस्य पाकिस्तानस्यावैधोऽधिकारः समवृत्तो यस्य कुत्सितं परिणाममास्वातन्त्र्यमद्यावधि समग्रं राष्ट्रं भुङ्क्ते। इमामेव सत्यतां प्रकाशयन्ती 'कार्गिलम्' इति शीर्षकेण रचिता गजलगीतिः कं भारतीयं न दुःखाकरोति—

राष्ट्रशासनस्य शाश्वतीमदूरदर्शिताम्।
डिण्डिमेन भूरि भूतले तनोति कार्गिलम्।।

जम्बुकोऽपि सिंहकन्दरे सुखं समाविशेत्।
सत्यमेतदुज्ज्वलीकरोति किन्न कार्गिलम्।।
यत्र कल्पितं शठत्वमेव भारतैः शठे।
दुष्फलं तदीयमेव संव्यनक्ति कार्गिलम्।।

वीरयोधिनां विलोक्य साहसं हुतात्मनाम्।
कस्य नोऽन्तरालकं चिरं दुनोति कार्गिलम्।।

कस्य पापकर्मणा हुता नवाङ्कुराः शतम्।
प्रश्नमद्य पृच्छतीति शोणिताक्तकार्गिलम्।।

हन्त यद्गृहं निमज्जितं घने तमश्चये।
तत्कथं प्रकाशयिष्यतेऽथ कौति कार्गिलम्।।

—कार्गिलम्। (मत्तवारणी, पृ. २४)

व्याकरणदर्शनसाहित्यादिविविधानां शास्त्राणां पाण्डित्यमर्जयित्वा लब्धोपाधयः, यथाकथञ्चित् पदे नियुक्ताः, स्वकीयं नेमज्ञानमध्यापने प्रकाशयन्तः, अध्यापनञ्च दूषयन्तो, विनेयान् छलन्तो, भृतिमात्रग्रहणे दक्षतां प्राप्नुवन्तः, स्वलक्षणैर्विशिष्टतामाप्नुवन्तः संस्कृतोपाध्याया अपि कवेर्वर्ण्यविषयतामुपगताः। एतद्दृशा 'भवतामुपाध्यायाः' इत्याख्या रचना समवलोकनीया—

अधीतं साम्प्रतं यावन्न शास्त्रं यत्तदिह सर्वम्।
इतोऽग्रे पाठयिष्यन्ति ध्रुवं भवतामुपाध्यायाः।।

अवर्तन्तेत्यशुद्धं मुद्रितं ग्रन्थे विशोध्येदम्।
अवर्तन्निति तिङन्तं शुद्धमुपदेक्ष्यन्त्युपाध्यायाः।।

स्वजिह्वाऽऽलोडनैरुच्चार्य सम्यगिमे पुनर्रमते।
ढ्रलोपेत्यस्य नव्यार्थञ्च वितरिष्यन्त्युपाध्यायाः।।

न यद् भूतं भवति वा साम्प्रतं भविता न चाऽप्यग्रे।
तदध्यापनविलक्षणवर्त्म निर्मास्यन्त्युपाध्यायाः।।

—भवतामुपाध्यायाः। (मत्तवारणी, पृ. १२६)

साम्यवादिनां चिन्तनेन प्रभाविताः कतिपये वामपथसिद्धान्तानुयायिनो विचारकाः, आङ्ग्लसमाचारपत्राणां विशिष्टस्तम्भलेखकाः, एतादृशा एव नेतारः स्वकीयाल्पज्ञानजनितान् दुस्तर्कान् आश्रित्य स्वदेशस्य गौरवपूर्णेतिहासम्, सांस्कृतिकीं निधिम्, उदात्तपरम्परामेतेषां विधीनां निधिरूपाणि वेद-पुराण-रामायण-महाभारतादीनि शाश्वतसाहित्यानि व्यर्थपुराप्रलपितानि मत्वा एतेषामुपयोगितायां प्रश्नचिह्नं स्थापयन्ति, ऐतिहासिकघटनानां नूतनव्याख्यानं कुर्वन्ति, आर्यान् वैदेशिकान् मन्वाना रामस्य भारतीयतायामपि सन्दिहते। एतादृशविचारान् नमस्यन्ती 'ज्ञानाय ते नमः' नाम्नी रचना उच्छृङ्खलानां चरित्रं सम्यक् चित्रयति—

रामो बभूव भारते किं तत्र प्रमाणम्?
संसदि यदेवमुच्यते ज्ञानाय ते नमः।।

आर्याः समागता बहिस्त एव भारते।
यद्येवमादि बुध्यते ज्ञानाय ते नमः।।

जाता न जातु भारते वैमानिकी कला।
इत्थं यदीह घुष्यते ज्ञानाय ते नमः।।

ब्रह्मास्त्रविषयिवस्तु महाभारतोदितम्।
यदि कल्पनैव पुष्यते ज्ञानाय ते नमः।।

—ज्ञानाय ते नमः। (मत्तवारणी, पृ. ११२)

अभिराजस्याभिराजता न केवलं सामयिकदुरवस्थानां चित्रणे, विसङ्गतीनां निरूपणे, व्यङ्ग्यशरसन्धाने, स्वानुभूतानां दंशानां, सोढानां प्रहाराणाञ्च चित्रणे वर्तते, अपि तु सुरम्यपरिधानसुसज्जितप्रकृतिचित्रणेऽपि दृग्गोचरीभवति। एतस्य सबलाः परिचायिकाः, 'सपादिका मधुमासस्य', 'वारिदाः', 'रविभास्वरं प्रभातम्', 'वत्सला गङ्गा', 'चन्द्रिका'प्रभृतयो रचनाः। प्रतिशाखं मञ्जरिता रसालवनी, गुञ्जरितमधुलम्पटमधुपावलिः, सुखोच्छ्वसितानां चातकानां पिहु पिहु इति ध्वनिः, कदम्बमधूकपलाशपलाशचयैर्विलसिता पृथिवीरमणी, मण्डलितशिखिकुलम्, रतिरागेण विसंष्ठुलं मनः, एतैः सुरम्यस्य मधुमासस्य वर्णनपरा 'सपादिका मधुमासस्य' कस्य मनो न हरति—

मधुगन्धवशीकृतपानकलम्पटभृङ्गनिकायसमाकलिता
पुरुहूतदिगागतगन्धवहेरितपल्लवसञ्चयसञ्चलिता।
ददृशे यदरालरसालवनी प्रतिशाखमनारतमञ्जरिता
बुबुधे सहसैव तदा धरणी मधुमासकथा पुनरापतिता।।

विविधैस्सुमनोभिरशेषवनी कमनीयतमां द्युतिमातनुते
नवपल्लविनी गिरिजाव्रतती गिरिजश्च तरुच्छविमुच्चिनुते।
द्रुमपर्णनिरन्तरताऽन्तरितार्कमयूखवटश्श्रियमाश्रयते
निखिलं भुवनं परिवर्तयते मधुमाधवमास इहाक्रमते।।

सपादिका मधुमासस्य। (मधुपर्णी, पृ. ६९)

न केवलं बाह्योद्यानलतातरुकुसुमादिविलसिते प्रकृत्यङ्कनेऽपि तु मानवानामन्तश्चित्रणेऽपि एतस्य विशिष्टाऽभिराजता राजते। यथा भ्रातृजायादेवरयोः

परिहासः स्थविराणामपि मनश्चाञ्चल्यं, श्रुतिपेशलरागरञ्जितफाल्गुनिकगायनं, पुष्पधन्वनः शरसन्धाने चराचरस्य वशंवदतां चित्रयन्ती सपादिका सचेतसामाह्लादं सपादं वर्धयति—

रुचिरैव विभाति गृहे नगरे तरसा मधुमाधवमासकथा
स्थविरोऽपि समञ्चति देवरतां चटुवाचनिकः प्रमदासु यथा।
अवलोक्य विलासकुतूहलकेलिरतान् युवकान् हतचित्तरथा
ननु वर्षवरा कलयन्ति रुजं समजायत जन्म चिराय वृथा।।
ऋजुकं स्वछविल्लकदेवरमाशु विलोक्य निमीलितलोचनकं
मसिकाञ्जनकज्जलधातुचयैः कृतभण्डविदूषकरुद्रमुखम्।
प्रहसन्ति सहेलमहो प्रमदाः स न वेत्ति रहस्यमिदं तनुकं
मुकुरे नहि यावदसौ स्वमुखं प्रविलोकयते कृतवञ्चतिकम्।।

एवं 'वारिदाः' इति शीर्षकेण रचिता रचना सुदूरे नीलाभगगने घटाटोपमाचरतां, विभिन्नाकारं धारयतां, शुष्कसरित्प्रवाहं कीलालैः पूरयतां, सस्यसम्पदां हर्षयतां, निदाघदाहं शमयतां, सर्वान् सुखिनो विधाय तत्कालं लुम्पतां, जीवनमिदं परार्थमेव रम्यमिति मानवान् सन्दिशतां, वियोगिनीनां हृदयं दहतां घनानामतिरमणीयं चित्रणं विदधाति—

वृष्टेरनन्तरं क्व विलुम्पन्ति वारिदाः
स्वीयां प्रशस्तिमपि नहि शृण्वन्ति वारिदाः।।
आपूर्य निम्नगोदरं कीलालसञ्चयैः
अस्तित्वमेव हन्त निजं घ्नन्ति वारिदाः।।
शस्यं निदाघदाहशुष्कमाशु वारिभिः।
उज्जीव्य दधीचेर्व्रतं वहन्ति वारिदाः।।
सम्प्रोषितेऽथ वल्लभे कस्मादमी परम्।
हृदयानि योषितामहो दहन्ति वारिदाः।।

—वारिदाः। (मत्तवारणी, पृ. ११८)

चन्द्रिकाभिधायां गीतिरचनायां कुं मोदयन्ती कौमुदी मोदावहशैल्यां वर्णिताऽस्ति। क्वचित् सा मातृवात्सल्यकल्पा समग्रां धरामेव स्वाञ्चले सङ्गूहमाना प्रतीयते, क्वचिच्च सुधाकुम्भात् स्रवन्ती सुधेव सकलां वसुन्धरामेवाऽऽप्यायमाना

भाति। क्वचित् शीतश्यानां धरित्रीं तूलतल्पैरवन्ती शोभते, क्वचिच्च ध्वान्तध्वंसे प्रभाकररश्मिभिः सह स्पर्धमाना दृश्यते। क्वचित् प्रीतितरङ्गोच्छलन्ती रागवशात् प्रियतमं चन्द्रमालिङ्गन्ती स्रस्तनीव्यम्बरा नायिकेव राजते, क्वचिच्च चित्रशैलूषिकेवाऽभ्रगङ्गाश्रियं शम्भुहासच्छविञ्च दधाना प्रकाशते—

मातृवाल्सल्यकल्पाऽवदाताऽखिलां
रोदसीमेव सङ्गूहते चन्द्रिका।
चन्द्रकुम्भच्युतक्षीरभारोच्चय-
प्राप्तसाम्या धरामूर्णुते चन्द्रिका॥
वीक्ष्य शीतार्दितां भूतधात्रीमहो
तूलतल्पैरिव त्रायते चन्द्रिका।
ध्वान्तवृन्दव्यपोहे प्रभाभी रवेः
स्पर्धमाना न किं युद्ध्यते चन्द्रिका॥
कान्तमिन्दुं समालिङ्ग्य रागोन्मदा
स्रस्तनीव्यम्बरं मुञ्चते चन्द्रिका।
चित्रशैलूषिकेवाऽभ्रगङ्गाश्रियं
शम्भुहासच्छविं नह्यते चन्द्रिका॥

—चन्द्रिका। (मत्तवारणी, पृ. ७८)

मत्तवारण्या मधुपर्ण्याश्च काश्चन गजलगीतयो रसराजशृङ्गारस्य सरसां मधुराञ्च रसधारामुच्छालयन्त्यः सहृदयान् रससिक्तान् विदधानास्तस्यै कविप्रेयस्यै समर्पितास्सन्ति यस्या मनोमुग्धकारिरूपं, कमनीयः शृङ्गारः, चित्ताकर्षका हावभावा अनुभूता विविधेषु प्राकृतदृश्येष्वपि दृष्टिगोचरा भवन्ति। मेघाच्छन्नार्धदृष्टः पूर्णचन्द्र इवार्धावगुण्ठितं वदनं नलिनीपत्रस्थितनीहारबिन्दव इव नेत्राश्रुबिन्दवः वसन्तकालोन्मत्तानां पिकानां कुहूध्वनिरिव प्रियतमदर्शनाद् अधरोच्छलत्स्मित-मर्धवृत्तबलाकेव ग्रैवेयकं, कदलीलतामण्डपे उद्यद्रक्ताभसूर्यप्रकाश इव विशेषकं, विद्युच्चमत्कृतिं चञ्चद्घनघटेव मल्लिकामालागुम्फितः केशपाशः, हुङ्कृतिं कुर्वाणा वत्सं पाययन्ती गृष्टिरिव गर्भदोहदः, सरोवरे विहरन्ती राजहंसीव गृहाङ्गणे भ्रमन्ती प्रिया, कुलायलीनवयसामस्फुटा चुञ्कृती रतिकाले आवयोर्मिथो भाषणमेतत् सर्वमविस्मरणीयं वर्तते—

साऽम्भोधरी जवनिका स च पार्वणो मृगाङ्कः।
तत्तेऽर्धगुण्ठवदनं कथमद्य विस्मरेयम्॥
नीहारबिन्दवस्ते कतिचित्सरोजपत्रे।
त्वन्नयनजललवास्ते कथमद्य विस्मरेयम्॥
स रविश्च शोणिताभः कदलीगृहे समुद्यन्।
तदहो विशेषकं ते कथमद्य विस्मरेयम्॥
सा घनघटाऽतिकृष्णा विद्युल्लता प्रदीप्ता।
कबरी प्रमल्लिका ते कथमद्य विस्मरेयम्॥
पल्वलविहारलीलानिरता नु सा विहङ्गी।
सा त्वं गृहाङ्गणे मे कथमद्य विस्मरेयम्॥
—कथमद्य विस्मरेयम्। (मत्तवारणी, पृ. १४२)

'मे मनो लग्नम्' शीर्षकेण रचिता रचना यत्रैकतः प्रियां प्रति प्रणयभावभरितस्य प्रियतमस्य रससिक्तभावभङ्गिमानं वर्णयति, तत्रैवाऽपरतस्तस्य काव्यकौशलस्यापि निदर्शनं प्रस्तौति। मेनकेव प्रियतमां प्रति कौशिकवत्, पार्वणेन्दुवदनां प्रति सागरवत्, प्रीतिपत्राणि प्रति वाचकवत्, नाट्यं प्रति मारिषवत्, विलासान् प्रति याचकवत् संलग्नं मनोऽत्र चारुचित्रितं वर्तते—

रोदरीभूय मे मनो लग्नम्।
सोदरीभूय मे मनो लग्नम्॥
मेनकां त्वां निजाश्रमे लब्ध्वा
कौशिकीभूय मे मनो लग्नम्।
वातलोलं तवाञ्चलं दृष्ट्वा
कण्टकीभूय मे मनो लग्नम्।
पार्वणं प्रेक्ष्य हन्त वक्त्रेन्दुं
सागरीभूय मे मनो लग्नम्।
चञ्चलं प्रेक्ष्य भाग्यपाठीनं
धीवरीभूय मे मनो लग्नम्।
अस्ति नास्तीति ते कटीवादे
मेखलीभूय मे मनो लग्नम्॥
—मे मनो लग्नम्। (मधुपर्णी, पृ. १८)

रमणीरागरञ्जितं कविहृदयं पानस्य सार्थक्यं प्रियालोचनैः पाने, क्रयणसाफल्यं हृद्याहृदयक्रये, गीतिसार्थक्यं कान्ताकण्ठस्वरेण गायने, वयसः सार्थक्यं कम्राकुञ्चितकेशे, दिवसयापनसाफल्यं प्रेयस्याः पथोऽवलोकने, अध्ययनस्य साफल्यं रमण्या हृदयाध्ययने मनुते—

पात्रेण साधु पीतं चुलुकेन चापि पीतम्।
ताम्यति मनस्तथापि त्वल्लोचनैर्न पीतम्।।

क्रीतं सुवर्णजातं क्रीतञ्च भूरि रत्नम्।
किं तेन सुभ्रु यदि ते हार्दं मया न क्रीतम्।।

धैवतनिषादषड्जैर्ननु पञ्चमेन गीतम्।
स्पृह्ये तथापि यत्ते कण्ठस्वरैर्न गीतम्।।

नीतं वयः स्वदेशे नीतं वयो विदेशे।
किं तेन यदि तवाञ्चत्केशे वयो न नीतम्।। (मत्तवारणी, पृ. ४)

मधुपर्ण्यां छन्दोविनिर्मुक्ताः, अर्थगाम्भीर्यसमन्विताः प्रतीकात्मिकाः काश्चन रचना निबद्धास्सन्ति, यासु काव्यनाट्येतिहासेषु ख्यातचरितान् पात्रान् कल्पितांश्च समाश्रित्य सामयिकस्थितीनां, व्यवहृतीनां, चरितानां, घटनानां सङ्घटनं कृतमस्ति। काव्यदृशा इमा छन्दोनिर्मुक्ता अप्रस्तुतप्रशंसाविषया नवशिल्पदृशा प्रतीकात्मिका अभिव्यक्तयः। अनया रीत्या मृच्छकटकीयां कथामाश्रित्य 'वसन्तसेना', 'उपालम्भो रोहसेनस्य' विशेषतः श्लाघनीये वर्तेते। यथा वसन्तसेनाभिधायां रचनायां वसन्तसेना रूपगुणयौवनविद्याकलाविभूषितानां, स्वविषयकोचितनिर्णये क्षमाणां स्वाभिमानिनीनां नारीणां प्रतीकभूताऽस्ति, या रूपयौवनशीलसम्पन्नं नियतिवशाद् दुर्दैवमनुभवन्तं कमपि चारुदत्तं कामयते; परं तां लम्पटो, मद्यपो, व्यसनी कोऽपि राजश्यालको राजसम्बन्धी वा कामयते। स्थितिमिमां कवमानः कविः स्वकीयं चिन्तनमभिव्यनक्ति—

इदमेव विडम्बनं रमणीजीवनस्य
कोऽप्यनभीष्टस्तां कामयते।
सा च कमप्यभीष्टमपरम्
अस्मिन्नेव
अभीष्टाऽनभीष्टसङ्करे
वराकी नारी दुर्व्यवतिष्ठते।

रामं रघुनन्दनमियेष वैदेही
ताञ्च रतिलम्पटो रावणः।
द्वारकाधीशमियेष रुक्मिणी
ताञ्च निर्गुणशिशुपालः।
हन्त सनातनीयं परिपाटी
दुर्नियतेः पुरन्ध्रीणाम्।।

प्रायो दृश्यते वीथिकासु, राजमार्गेष्वापणेषु, विपणीषु, शिक्षासंस्थानेषु, कार्यालयेषु, सार्वजनिकस्थानेषु यद् रूपयौवनसम्पन्नाः सुन्दर्यो लम्पटैः कदर्थिता भवन्ति। शकारवज्जनानां व्यङ्ग्यबाणैर्विद्धा भवन्ति—

शकारसेवको मां ब्रूते
पश्य वसन्तसेने।
लतां गाहते काकोऽपि
नद्यां स्नाति सारमेयोऽपि।
नौकायां तिष्ठति ब्रह्मक्षत्रेतरोऽपि।।
वसन्तसेने!
लतेव त्वमसि
नदीव त्वमसि
नौकेव त्वमसि
सर्वभोग्याऽसि त्वं भद्रे
वेश्यासि, भज सर्वं
स्वीकुरु, राजश्यालं शकारम्।।

परं शिक्षिता स्वाभिमानिनी वसन्तसेना तदोत्तरयति चिन्तयति च—

क्व चायं राजश्यालश्शकारः
निर्गुणो लम्पटः
क्षुद्रो दुर्मदः
वशीकृतशासनतन्त्रः
मूषिकीकृतनरपतिः
दुर्दान्त उद्धतः
यो न परिचिनोति नारीगौरवं
न जानाति प्रणयं

नाद्रियतेऽसौ जाल्मः
उभयनिष्ठतां भोगाऽऽकाङ्क्षायाः
तत्कृते भक्ष्यभूतैवास्मि
तत्कृते शरीरमात्रमहमस्मि
प्रतिसन्दिष्टम्मया-
चेट! भण राजश्यालं यद्
व्यंसकमयूर
कलापिकलापधारणमात्रेण
न त्वं भवसि मयूरः
मूढ! यत्तिष्ठति तवाधिकारे
वसन्तसेना
तत्सर्वं धूलिकल्पं मन्यते
तव प्रवहणं
तव पुष्पकरण्डकोद्यानं
धनवैभवञ्चातुलम्
परप्रत्ययनेयबुद्धे
आलाने गृह्यते हस्ती
वल्गासु गृह्यते वाजी
हृदये चापि गृह्यते नारी
केवलं हृदये॥

—वसन्तसेना। (मधुपर्णी, पृ. १०६-११३)

एवं 'उपालम्भो रोहसेनस्य' इति नाम्न्यां रचनायां रोहसेनो धैर्यसंयमशालिनः समुचिताचारशीलस्य निर्धनस्य पितुः पुत्रो वर्तते, यः पूर्वं मृच्छकटिके शूद्रकेण प्रतिवेशिनो बालकस्य सुवर्णशकटिकायै स्पृहमाणो गृहसेविकया वत्सलया रदनिकया आश्वासितः शकटिकां मृण्मयीं सुवर्णशकटिकारूपेण प्राप्य प्रसीदन् मुग्धबालकरूपेण चित्रित आसीत्। तदेव मृच्छकटकीयकथासूत्रमवलम्ब्याऽत्र रोहसेनो निर्धनपितुः पुत्रस्य प्रतीको वर्तते, यस्य दैन्यं, निःसत्त्वं व्यतीतायामपि शताब्द्यां यथावद् वर्तते, येन समृद्धेः स्वप्नः सञ्चितः परं साकारं कर्तुं न शशाक। यस्य मातुः जर्जरशाटिकाऽद्यापि सैव, यस्य पितुः जीर्णं शीर्णं गृहमपि तदेव, तद्वदेव शीलवन्तौ आचारवन्तौ पितरौ, परं यन्नास्ति तत् स्नेहशीला वसन्तसेना, मातृकल्पा रदनिका च। अतिरोहिता सुवर्णशकटिकाभिलाषा न वावलोक्यते प्रतीक्षायाः समाप्तिघटिका—

रदनिके!
साम्प्रतं हताशोऽस्मि सञ्जातः
त्वत्सान्त्वनावैयर्थ्यमवगच्छामि
सुष्ठ्वनुभवामि राष्ट्रेऽस्मिन्
रोहसेनानां भविष्यम्।
एषु व्यतीतप्रायेषु
अष्टादशशतहायनेषु
श्रीविशाला विशालेयं कालिदासस्य
उज्जयिनी विक्रमार्कस्य
अवन्तिका राजशेखरभोजराजयोः
पुष्पकरण्डिनी चार्हतानां
कतिधैव न समुत्पन्ना
कतिधैव न पुनर्निर्मिता
महाकालमेकं विहाय
किं किं न विपरिवर्तितं जातम्?
ध्वस्ताः खलु प्राचीनसौधाः
समुत्थिताः शिलीन्ध्रकल्पा नवाः
कालगल्ले विलीनाः परार्घ्यसम्पदः
निर्मिता नूतनराजपथाः
समागता अभिनवशासकाः
ह्यस्तना दरिद्राः
सञ्जाता अद्य लक्षपतयः
परन्तु रदनिके!
रोहसेनोऽहमद्यापि
नित्यनिर्मितमृच्छकटिकयैव
आत्मानं विनोदयामि।।

—उपालम्भो रोहसेनस्य। (मधुपर्णी, पृ. ९८-१०५)

कविताया इमा पङ्क्तयः कियतीं गभीरामभिव्यक्तिमात्मसात्कुर्वाणा दृश्यन्ते, यदा स कथयति यत् शकारसदृक्षा दुश्चरित्राः, पदे प्रतिष्ठिता जना रक्तबीजतामुपगताः, ते प्रतिवीथीं, प्रतिग्रामं, प्रतिनगरं निर्दोषान् चारुदत्तान्

पीडयन्ति, वसन्तसेनाञ्च कण्ठं निष्पीड्य मारयन्ति, अकृतापराधानपि चारुदत्ततनयान् पादप्रहारैरवमन्यन्ते—

रदनिके!
रक्तबीजतामुपगतः किन्तु
त्वद्युगीनश्शकारः
सोऽधुनाऽपि स्वपरिजनैस्सह निर्भयं ढौकते
प्रतिपथं प्रतिवीथिकं
प्रतिग्रामं प्रतिनगरम्
सर्वान् निर्दोषांश्चारुदत्तान्
पूर्ववदेव शातयत्यसौ सपत्नधिया
भोगलम्पटोऽसौ नरपशुः
हन्ति निर्दयं गलमाकुञ्च्य वसन्तसेनाम्।।

(मधुपर्णी, पृ. ९८-१०५)

अन्ते कवेरियं भणितिर्भारतेऽस्मिन् लक्षाधिकाः चारुदत्तशिशवो दुष्टैः शकारैः कृतविकलाङ्गा अन्धीकृतास्तस्करभिक्षाटनकार्येषु नियोजिता भवन्ति। तेषां किम्? रदनिके! शरीरं तपति, मनो ज्वलति, बुद्धिर्विकला भवति। अयं रोहसेनः सत्यं म्रियते, अस्मिन् शकारतन्त्रीये भारतेऽपुनरागमनाय—

रदनिके!
तातप्यते वपुः
दन्दह्यते मनः
बम्भ्रम्यते कनीनिका
तद् विश्वसिहि मातः
एष ते रोहसेनः
परमार्थतः पञ्चत्वमुपयियासति
इह शकारतन्त्रे भारते
अपुनरागमनाय।।

(मधुपर्णी, पृ. १०५)

विभिन्नानामैतिहासिकघटनानां सामाजिकानाञ्च प्रथानां सन्दर्भविशेषे कवेर्गभीरं चिन्तनमनेकत्राऽभिव्यक्तमस्ति। प्रतीकात्मिकानां रचनानां प्रणयने

प्रवृत्तिरियं विशेषतयोपलक्ष्यते। आसां रचनानां प्रणयनस्योद्देश्यमिदमेवेत्युक्तिरत्युक्तिं न बिभर्ति। 'पत्रं श्रीबाणभट्टस्य', 'मृतघट्टोऽहम्', 'शम्भो', 'वक्तव्यं शुष्कवृक्षस्य' इत्याद्या रचना निदर्शनीभूतास्सन्ति। सर्वप्रथमं 'पत्रं श्रीबाणभट्टस्य' इत्याख्या रचना दृग्गोचरीकरणीया। इदमैतिहासिकं वृत्तमतिविश्रुतं वर्तते यद् विलक्षणप्रतिभाशालिनो बाणभट्टस्य प्रारम्भिकं जीवनं बण्डायमानमासीत्। कान्यकुब्जेश्वरेणाऽऽहूतोऽप्ययं 'महानयं भुजङ्गः' इत्युपाधिनैव विभूषितः। कटाक्षेणानेन उद्दीप्तस्वाभिमानगौरवेण बाणेन विद्वज्जनसम्मर्दबहुलायां सभायां नतेनोत्तरितम्। तमेव प्रसङ्गविशेषमभिलक्ष्य कवेः सुचिन्तितं मतं रचनायामस्यां तथाऽभिव्यक्तं यत् सहृदयान् बलादाकृष्य तथाचिन्तनाय बाध्यं करोति। कवेः प्रश्नोऽयं वर्तते यत् तथागतः शयानं स्तनन्धयं बालं, यौवनभारभङ्गुरां भार्यां तथा पुत्रवियोगकातरं जराजीर्णकलेवरं जनकं परित्यज्य सांसारिककर्तव्यविमुखः परिवव्राज, किमुचितमेतत्?

गर्वितोऽसि त्वं तेन तथागतेन<br>
यो गृहदायित्वमपि नो सम्पादयामास<br>
तत्याज प्रसुप्तं दुग्धमुखं दारकं<br>
यौवनभारभङ्गुराञ्च भार्यां<br>
तनयवियोगकातर-<br>
मशक्तं वृद्धजनकं<br>
क्लीब इवोद्विज्य संसाराद्<br>
यः प्राद्रवत् संसाररक्षार्थम्?

—पत्रं श्रीबाणभट्टस्य। (मधुपर्णी, पृ. ११४-१५)

कवेरुक्तिरियं निश्चप्रचं गभीरप्रश्नपृच्छिका यद् रक्षणीय एव परिहर्तव्यश्चेद् यदि वा संसारं परित्यज्य संसाररक्षाभावना, समरं विहाय समरविजयेच्छा, तर्हि खपुष्पमिव किं न मिथ्यायितं स्यात्? वेदेषु उपनिषत्सु पुराणेषु चत्वारि आर्यसत्यानि न प्रतिपादितानि सन्ति? विभिन्नेषु दर्शनेष्वज्ञानावरणभङ्गाय नास्ति मार्गदर्शनं किम्? तर्हि कुत्रास्ति सिद्धार्थस्य सिद्धार्थता—

हन्त कियदुपहासकरमिदं<br>
यस्य रक्षा काम्यते<br>
तत एव पलायनं क्रियते?<br>
संसारं परित्यज्य संसारस्य रक्षा?

समरं विहाय समरविजय:?
किमुपलब्धं तव सिद्धार्थेन?
किमुपकृतं तव सिद्धार्थेन?
चत्वारि आर्यसत्यानि प्रागपि को न ज्ञातवान्?
किमेतानि पूर्वं नोपदिष्टानि
वेदेषु पुराणेषु काव्येषु
तापत्रयनिवारणं
किं नोपदिश्यते सांख्यदर्शनेन
अज्ञाननिवृत्ति: किं नोपदिश्यते वेदान्तेन
तत्किमभिनवं प्रोक्तं सिद्धार्थेन?
राजन्! क्व तिष्ठति सिद्धार्थता तव सिद्धार्थस्य?
—पत्रं श्रीबाणभट्टस्य। (मधुपर्णी, पृ. ११५)

बाणमुखेन कवि: बौद्धान् तद्धर्मफल्गुतां प्रकटयन् कथयति—राजन्! स्वकर्तव्यवैमुख्येन निर्वाणं नाप्नोति कोऽपि, प्राप्नोति च स्वोचितकर्मसम्पादनेन। इयं सृष्टि: कर्माधीना वर्तते, प्रकृति: पञ्चभूतान्यपि सदैव कर्मनिरतानि सन्ति। सूर्यस्तपति, वायु: प्रचलति, अग्निर्ज्वलति, नदी प्रवहति जनान् आप्लावयति तृषार्तान् तर्पयति, वृक्षा फलन्ति छायेन्धनानि च ददति, वसुन्धराऽन्नौषधीश्चोत्पाद्य सर्वान् तर्पयति। स्वयं परमात्माऽपि जगदुत्पत्तिसंहृतितत्पर:, जना: कर्मतत्परा भवेयुरिति शिक्षयति? किं गौतमस्याऽपर: संसारो यं निन्दति स:—

हर्ष!
किं तव गौतमस्य काप्यन्या सृष्टि:?
कश्चिदन्य: संसार:?
यत्र सर्वेऽपि श्रमणा एव वसन्ति
सर्वेऽपि परिव्राजका एव सन्ति
न कृषका: शिल्पकारा: श्रमजीविनो वा?
त्वन्निर्मितेषु
बहुभूमिकविहारेषु
सर्वसुखानन्दनिचितेषु
एते मुण्डितशिरस्का मल्ला:
स्वैरं विहरन्ति निश्चिन्तम्।

पृच्छति बाणभट्टोऽयं
प्रजाप्रतिनिधिः
कस्यान्नं त्वमेतान् भोजयसि?
कस्य वस्त्राणि त्वमेतान् परिधापयसि?
एतत्सर्वं न तवाऽपि हर्ष!
सर्वमेतल्लोकस्य।।

—पत्रं श्रीबाणभट्टस्य। (मधुपर्णी, पृ. ११७)

युवानोऽपि मुक्तये परित्यज्य कर्ममार्गं श्रमणा भवेयुरित्येव सौगतं जीवनदर्शनम्? स्वेदपरिप्लुताङ्गा जराजीर्णकलेवरा अपि कृषका श्रमातुरा अपि कृषिकार्यं कुर्वन्ति, अन्नौषधीश्चोत्पादयन्ति, इमे मस्तमुण्डा भिक्षाचर्यां चरन्तो निगिलन्ति—

युवानोऽपि निर्वाणधिया
कर्तव्यपथं विहाय
श्रमणाः स्युः
किमयमेवोपकारस्सुगतस्य?
वृद्धाः स्वेदाञ्चितवपुषः सश्रमं कृषिकर्म कुर्वन्तु
निर्वाणकामा पुनरेते बलीवर्दा
अकृत्वैव किञ्चित्
सायं प्रातः
उदरम्भरि भक्षयन्तु
कुतस्त्योऽयं न्यायः? (मधुपर्णी, पृ. ११६)

इत्थं सनातनधर्मविमुखानां बौद्धश्रमणानां सिद्धान्ते व्यवहारे च कवेस्तीक्ष्ण-प्रहाराः पाठकान् श्रोतॄंश्च चिन्तनाय बाध्यान् कुर्वन्ति। अपरः प्रश्नोऽयं यत् कर्मप्रधाने यस्मिन् भारते उपनिषद् घोषयति—'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति, तत्रैव कर्मणां ईदृशस्तिरस्कारः, पौरुषस्य ईदृशी निराकृतिः?

हन्त, यस्मिन् कर्मयोगपक्षधरे राष्ट्रे
उपनिषदः समुद्घोषयन्ति
कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इति
तस्मिन्नेव भारतराष्ट्रे

कर्मणोऽयमवमान:?
पौरुषस्येदृशी गर्हणा?
हर्ष! धिक् तं धर्मं
धिक् धिक् तं सम्प्रदायं
यो लोकं क्लीबं विदधाति
यो लोकं कर्मपराङ्मुखं कुरुते
यो लोकं पराश्रयिणं परोपजीविनं साधयति।

(मधुपर्णी, पृ. ११६)

एवं 'मृतघट्टोऽहम्' इत्याख्या रचना समदर्शनीया। घटोऽस्माकं जीवने दैनन्दिननानाविधकार्यसम्पादनायोपयोगी महत्त्वपूर्णं पात्रं वर्तते। अयमेवाऽघटित-घटनासम्पादने पटीयसोऽगस्त्यस्य, इक्ष्वाकुकुलगुरोर्वसिष्ठस्य, जगज्जनन्या: सीतायाश्च प्रभवस्थानम्। अयमेवाऽङ्गनानां जलवहनश्रमस्य साक्षी, गोपाङ्गनानां दधिहैयङ्गवीनपात्रं नन्दनन्दनस्य च बालचापल्यस्फोटनसाधनञ्च वर्तते। एकतोऽयं यागादिषु कलशस्थापने प्रयुक्तो भवति, अपरतश्च मृतात्मनां तृषाशान्तिसाधनमपि भवति। परमभिराजस्य मन: पूर्वोक्तनानाप्रकारकघटकौशलेन नानुरज्यते। तस्य कवनकलाकेन्द्रमस्ति श्मशाने चैत्यवृक्षे मृतात्मनां तृप्त्यर्थं लम्बमानो घट:। 'मृतघट्ट'माध्यमेन कवेर्भावो मुखरितोऽभूद् यत् संसारे कियन्तो जना गगनचुम्बि प्रासादान्, वनान्युपवनानि, देवालय-सेतु-कीर्तिस्तम्भ-जयस्तम्भान् निर्मापयन्ति परं ते विस्मरन्ति यद् महाकालकलनावसरे केवलमहमेव तस्यान्तिमं सार्थं निर्वहामि। अहं कमपि प्रति दृष्टिभेदं न कृतवान्, न वा प्रलोभनैराकर्षितोऽहम्। राज-राजदारा-योगि-भिक्षु-खञ्जान्ध-बधिर-पापि-पुण्यात्मनां सर्वेषां समभावेन समादरं कृतवान्। यो येनापि भावेन यस्यां वा मनोदशायां मत्सविधं समागतस्तस्याहं समुचितं प्रतिष्ठामकरवम्, भवेत् कश्चन कर्पूरागुरुचन्दनाभिलिप्तो धूलिधूसरितो कन्थावेष्टितो वा। सर्वान् प्रति स्वकीयं विषमोत्तरदायित्वं निर्वहामि। सर्वेषां समभावेनैवाऽहं स्वागतं ब्रवीमि। यद् वस्तु यत उपलब्धं तद् तस्मा एव समर्पये। मृदं मृत्स्नायां, वारि वारिणि, मरुतं मरुति, पावकं पावके, गगनं गगने सम्मेल्य सर्वा वेदना: सर्वांश्च तिक्तानुभवान् अनुभवन्नहं महाकालद्वारस्य कपाटरूपेण स्थितोऽस्मि—

मृतघट्टोऽहं मृतघट्टोऽहं
जीवतां जनानां घृणास्पदं
प्रेतानां वंशीवाटोऽहम्
मृतघट्टोऽहम्।

सङ्गं जह्यान्ननु जगदखिलं
प्रियजनाः समस्ता विमुखाः स्युः
स्वागतं भणति बाहू प्रसार्य
यस्तदपि स एव सुभट्टोऽहम्
मृतघट्टोऽहम्।।

ये केऽपि समागच्छन् नु यथा
विलपन्तोऽथवा हसन्तो वा
वसुधामाकाशं दिगन्तरं
क्रन्दनैर्निजैर्द्रढयन्तो वा
कर्पूरचन्दनाऽगुरुलिप्ताः
कन्थावेष्टितवपुषः केचित्
केचित्सम्मर्दवाद्यसहिताः
केचित्कृत्ताङ्गाः सङ्कुचिताः।
कस्यापि कृते नाऽहसं किन्तु
नाथवा स्फुटितहृदयो व्यलुठम्
अचलोऽविचलो निश्चलोऽभवं
सच्चिदानन्दकल्पोऽविकलः
निष्पक्षतयाऽचञ्चलो दृढो
न मनाग् भीतो न च करम्बितः।
मादृशः किन्तु निःस्वार्थबन्धु-
रथ मादृश एव साम्यवादी
कुत्रापि न कश्चिन्मिलिष्यति
वादी भवताद् वा प्रतिवादी
लभ्यो यः प्रतिपदमनावृतोऽ-
सौ कालगृहस्य कपट्टोऽहम्।
मृतघट्टोऽहम्।।

—मृतघट्टोऽहम्। (मधुपर्णी, पृ. ९२-९७)

यद्यपि ममावासभूमौ कदापि मञ्जीरध्वनिर्नाऽभूत्। अवगुण्ठनावगुण्ठितार्ध-चन्द्रोदयोऽपि न जातः, शिशूनां कलरवोऽपि न श्रुतः, यद्यपि महामङ्गलशून्योऽहं नितान्तनिष्ठुरः क्रूरोऽस्मि परं मत्समः कोऽपि सौभाग्यभागपि नास्ति; यतो हि अनन्तब्रह्माण्डनायकः शम्भुः समग्रं विश्ववैभवं परित्यज्य प्राणप्रियां रुद्राणीं गणपतिमपि विस्मृत्य निरन्तरं ममाङ्गणे रमते। अतोऽहं शिवत्वाधारः परिपूतश्चामृतकलशो जातः—

ननु महामङ्गलश्शून्योऽहं
ननु महाऽकिञ्चनः क्रूरोऽहं
निष्ठुरो निर्ममः पापकटु-
र्मरणैकभटो ननु घृणास्पदम्
जीवितशेषो नु निमिषमात्रं
प्रणयास्पदमहं न कस्यापि
जर्जरं कुष्ठगात्रं तदहं
यत्संस्पर्शोऽपि न वरणीयः
ननु धन्योऽसौ स्रष्टा परन्तु
येनात्र टङ्किता भाग्यलिपिः
मादृशः किन्तु सौभाग्यसिद्ध
इह भूमण्डले क्वचिद् दृष्टः?
ब्रह्माण्डवैभवं तिरस्कृत्य
उपविष्टश्शम्भुर्ममाङ्गणे
रोदितु गायतु वा रुद्राणी
गणपतिरपि कामं प्रगल्भतां
तमन्तवदान्यं देवपतिं
पशुपतिमवाप्य धन्यो जातः
आसं महाऽशिवश्शिवः किन्तु
सञ्जातः कृपणाद् दानपरः
विश्वसिहि शिवत्वाऽऽधारोऽहं
परिपूतश्चामृतकलशोऽहम् ॥
मृतघट्टोऽहम्।

—मृतघट्टोऽहम्। (मधुपर्णी, पृ. ९२-९७)

वाग्वैभवेनाऽभिराजतां गतस्याभिराजस्य भाषा सरला, सरसा, मधुराऽन्त्यानुप्राससंवलिता, क्वचित् श्लिष्टा, क्वचिदन्योक्तिपरा, क्वचिद् यमकसंयमिता, क्वचिच्चोपमानोपमिता वर्तते। कवेरिमा अभिव्यक्तयो गभीरास्सन्ति। तत्प्रयुक्तासूपमासु, शास्त्रीयतायास्स्फुटं प्रकाशनं दृश्यते। 'वृथा जल्पन्ति' इति शीर्षकेण रचिता गलज्जलिका, एतादृशमेव दृष्टान्तं प्रस्तौति येन कविप्रतिभासमक्षं सहृदयश्रोतॄणां शिरांसि स्वयमेव घूर्णितानि भवन्ति—

वृथा जल्पन्ति पण्डितमानिनो जगतां नियन्तार:
अहं पुनरात्ममन्थनयैव वचसां सङ्गतिं जाने।
भवेद् वेदान्तिनां भ्रान्ति: क्वचिद्रज्जौ भुजङ्गानां
त्वदीये बाहुपाशे भ्रान्तिकोटिनिराकृतिं जाने।।
न मे व्यङ्ग्ये न लक्ष्ये नापि वाच्यार्थे मनागास्था
प्रिये तव वल्गुबिब्बोकै: पदानामन्वितिं जाने।
अहं ते त्वञ्च मे सुन्दरि! न खलु सम्बन्धमात्रमिदं
क्रियान्वयिकारके प्रथमां विभक्तिं दम्पतीं जाने।।
प्रमाकरणं प्रमाणं मन्वते यदि तार्किकप्रवरा:
प्रिये सर्वप्रमाणानां ध्रुवामाविष्कृतिं जाने।
अभिव्यक्तिर्न भुक्तिर्नानुमितिरथवा न वोत्पत्ति:
रसानां केवलं त्वदपाङ्गभङ्गपुरस्कृतिं जाने।।

—वृथा जल्पन्ति। (मधुपर्णी, पृ. २०)

वर्ण्यवस्तूनामङ्कने कविप्रतिभोल्लास: सन्दर्शनीय:। यथा सर्वाङ्गसुन्दर्या वसन्तसेनावर्णने सर्वा अप्सरस: सर्वाश्च ऋतव उपमानतया आरोपिता:—

अहमस्मि वसन्तसेना
रम्भोज्जयिनी वेशवाटस्य
मेनका विश्वामित्राणां
घृताची प्रमतीनां
प्रम्लोचा चापि कण्डूनां
मम भ्रूभङ्गे विलसत्यकुण्ठ: कन्दर्प:
विब्बोके वर्षा

कुट्टमिते शरत्
किलकिञ्चिते निदाघः
सर्वर्तुमयी विलासवनिकाऽस्मि
वसन्तसेनाऽहमस्मि।।

—वसन्तसेना। (मधुपर्णी, पृ. १०६)

मधुपर्ण्यां मत्तवारण्याञ्च कविना बहुत्र नामधातवः, सन्प्रत्ययान्ताः, यङन्ताः, यङ्लुगन्ताः, क्विबन्ताश्च शब्दाः प्रयुक्तास्सन्ति। उपमासु व्याकरणशास्त्रीयाः प्रयोगा अनेकत्र दृश्यन्ते। यथा—

अदृष्टोऽसौ, चिरात्पृष्टो मया स्मितकैः श्रुतावूचे।
मनुष्यं नूनमित्संज्ञं गणय बन्धो नियतलोपम्।।
तदीयां शिष्टतामथ सभ्यतां मध्येसभं दृष्ट्वा।
सचिन्तं भावये क्व न भागुरिस्स युयोज अल्लोपम्।।

—साटोपम्। (मत्तवारणी, पृ. ५०)

क्विबिव संयोजने दक्षं क्रियायां सर्वथा लुप्तम्।
मुखं कण्ठीरवं मन्ये हृदयमथ तावकं मेषम्।।

—उभयतोऽप्याहतं हृदयम्। (मत्तवारणी, पृ. ३०)

वर्ण्यवस्तूनां चित्रणे यत्रैकतो शास्त्रीयोपमानानां बहुविधाः प्रयोगा विलसन्ति, तत्रैवाऽपरतोऽन्त्यानुप्राससंवलिता, सौन्दर्यभूषिता, यङन्तयङ्लुगन्तच्विप्रत्ययान्विता भाषा प्रयुक्ता वर्ण्यवस्तुनोऽभिरामतां वर्धयति। उत्प्रेक्षाऽप्रस्तुतप्रशंसाद्यलङ्काराणां किङ्किणीभिः सुशोभना एषां कवितावनिता पदविन्यासमात्रेणैव सहृदयपाठकानां मनांस्यावर्जयति। निदर्शनार्थं सिसोदियावंशावतंसस्य, प्रगुरुपौरुषस्य, पराक्रमनिधेः मेवाडनरेशस्य महाराणाप्रतापस्य यशोगाथागाननिपुणा 'महाराणाप्रतापसिंहं प्रति' इत्याख्या कविताऽवलोकनीयाऽस्ति, या वर्ण्यभावानामङ्कने कवेः वर्णनधाराधुरां वहति—

हे हिन्दूकुलकमलसूर्य
हे स्वाभिमानचरमप्रमाण
चित्तौडभूपते
महाप्राण!

हे नीतिविशारद महामते
हे परमविलक्षण विशाम्पते
तत्कथं त्वया जानताऽप्यहो
कण्टकाकीर्णसङ्घर्षपथः
कान्तारदवानलकल्पोऽसौ
स्वीकृतः सर्वसुखतरुदाही!
स्वीययाऽऽलोकयष्ट्यैव विभो
सन्दीप्तं कस्मादात्मगृहम्?
मुगलाऽधिपत्यमाश्रित्य सुखं
कस्मान्न जीवनाऽमृतं वृतम्?
हे प्रजापते साहसनिधान!
हे भारतभूमङ्गलविधान!
निर्मितवानसि बहलं सैन्यं
सङ्गृह्य समेषां साहाय्यं
कुलवृद्धानामाशीर्वचनं
प्रकृतीनामपि जयजीववच-
स्त्वं प्रलयमरुत्वानिव गर्ज-
न्नरिपृतनोपरि समपतः द्राक्
चेतकपृष्ठारूढस्समरे
करवालभल्लमण्डितहस्तो
दृष्टस्समराङ्गणसूत्रधार!
बाप्पारावलवंशाभिमान!
त्वं शिशोदिया पौरुषप्राण!

(मधुपर्णी, पृ. १२६-१३०)

अभिराजस्य पदशय्या विशिष्टा लयात्मिका च वर्तते। भवेद् रचना छन्दोबद्धा छन्दोनिर्मुक्ता वा। सर्वत्र गतिमयते। आसां पठने, श्रवणे, रसास्वादे च सचेतसो निर्वृतिमाप्नुवन्ति, गाने लयमनुभवन्ति च। भावधारायां प्रवहमानाः पाठका आद्यन्तं पठन्तोऽरुचिमायासं वा नानुविन्दन्ति। उदाहरणार्थं संसारस्य विशालता,

प्रकृतेः रमणीयता, मानवीयभावभङ्गिमानां मधुरता, दुर्वचसां कठोरतेत्यादीनामाकलने कुशलानां प्रत्नेतरतरणिं निर्माणविचक्षणानां संसारं सत्यं, शिवं, सुन्दरञ्च विदधानानां मानसविहारे प्रवीणानां कवीनां चित्रणं 'कविरस्मि' इति शीर्षकेण रचितायां रचनायां दृग्गोचरीभवति—

तरुमूलं वसुन्धरागर्भे
ननु कियद् गभीरं कियद् दृढम्?
कियदुत्तुङ्गं नीलाकाशे
गिरिशिखरं कियत्पुनस्तीक्ष्णम्?
शैतल्यं कियत्कीदृशं वा
निर्झरसरिदम्बुदबिन्दूनाम्?
दाहश्च कीदृशः
सूर्यवह्निवाडवसन्तापज्वालानाम्?
द्राक्षापेक्षयाऽपि हन्त कियन्
माधुर्यं जननीचुम्बानाम्
कुलिशाऽपेक्षया कियच्चण्डं
दुस्सहप्रहरणं दुर्वचसाम्?
इत्येवमादिशत शतनिगूढपृच्छामर्माऽहं
परिचिनोमि
प्रस्तूय समाधानं शनकैः
स्तिमितं कोविदवृन्दं करोमि
जातोऽस्मि जगति केवलमेको जीवोऽहं
बन्धो!
स्वलक्षणः
कविरस्मि संसृतौ विलक्षणः॥

—अहमस्मि कविः। (मधुपर्णी, पृ. १३३)

गजलगीतेः उर्दूपरम्परया समीक्षणं क्रियते चेद् द्वयोश्चरणयो रदीफ-काफिया इत्यभिधानयोः प्रयोगः प्राय उपलभ्यते।

निदर्शनार्थं 'सम्प्रार्थये' इति शीर्षकेण रचिता रचनाऽवलोकनीया। अत्र रदीफपदेन चरणान्तेऽन्तिममावृत्तं पदम्, काफियापदेन तत्पूर्वमावृत्तं पदमुच्यते।

यत्रैकतो गलज्जलिकैषा परोपकारसार्थक्यनिरभिमानितानिरीहतादानशीलतादिगुणैः संवलिता, तत्रैव गजलनिर्मितिकलायां कविकौशलं सूचयन्ती तदन्तर्भावान् अभिव्यनक्ति—

देहि यस्मै धनं दीनबन्धोऽमितं
तं वदान्यं. विधेहीति सम्प्रार्थये।
देहि यस्मै यशो दिग्दिगन्ताश्रितं
तं निरीहं विधेहीति सम्प्रार्थये।।
वैदुषीं देहि यस्मायकुण्ठां प्रभो
वाग्मिनं तं विधेहीति सम्प्रार्थये।
देहि यस्मै खगत्वं प्रभो निर्भरं
तं जटायुं विधेहीति सम्प्रार्थये।।
देहि यस्मै द्रुमत्वं प्रभो मञ्जुलम्।
चन्दनं तं विधेहीति सम्प्रार्थये।।

—सम्प्रार्थये। (मत्तवारणी, पृ. ६०)

इत्थमेषां छन्दोबद्धछन्दोनिर्मुक्ताऽऽधुनिकरीतिनिर्मितगीतिसपादिकादीनां परिशीलनेन ज्ञायते यद् इमे रचनाकलाकलाधराः, आधुनिककविराजराजिमुकुटेषु जटितोज्ज्वलरत्नप्रभाप्रभाकराः, कृतभूरिपरिश्रमाः, गजलघनलास्यशीला मयूराः, काव्योदधेर्वर्धितपयःपूराः, तुषारकरा हिमकराः, अभिनवकवनीयविद्याविधाननिपुणाः, वाग्विकल्पेषु दर्शितमाधुर्यगुणाः, आधुनिकशिक्षाशिक्षिता अपि प्राचीनशिक्षासु दर्शितपक्षपाताः, वर्णितनिपाता निपाताः, प्रतिभाप्रतिभासप्रखरप्रकाशध्वंसिततमिस्राः **प्रो. राजेन्द्रमिश्राः** लेखनवर्णनकवनगीतविधावनुपमां कीर्तिमश्नुते।



# संस्कृतभाषाशिक्षणम्

**डॉ. श्रीमती लतापन्ततैलङ्ग**
प्राध्यापिका
शिक्षाशास्त्रविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी



भारतं नाम भारती, भारती नाम संस्कृतं, संस्कृतं हि संस्कृतिः। सुविदितमिदं सर्वेषां निखिलज्ञानमूलं वेद इति। तस्यैव वेदस्य प्राणभूतेयं संस्कृतभाषा। यतो वेदोऽपौरुषेयस्तत एवेदं स्पष्टं संस्कृतभाषाऽपि अपौरुषेया, अत: खलु न युज्यते मृतेयमिति वार्ता। मृतत्वञ्च तदैवाभ्युपगम्यते, यदा मृता मृतप्राया वा भवति। परमियं संस्कृतभाषा संविधानद्वारा सम्मानिता, जनैरवलम्ब्यमाना बहुत्र विद्यालय-महाविद्यालय-विश्वविद्यालयेषु विविध-जातिवर्णमतानुयायिभिर्विद्वद्भिरध्यापकैश्छात्रैः पाठ्यमाना पठ्यमाना च विराजते, येन चास्या व्यावहारिकता प्रसिद्ध्यति। अस्तु, व्यवहारेऽपि संस्कृतभाषाया विशिष्टता विद्वज्जनैः स्वीकृता।

भाषाशिक्षणं प्रायो व्यवहाराधीनं भवति। भाष्यत इति भाषा। परस्परविचाराणां बौद्धिकाभिव्यक्तेरेकं साधनं भवति भाषा। वस्तुतः शिशुः स्वीयवातावरणे अनुकरणादिद्वारा सावधानं किमपि श्रुत्वा भाषामभिगच्छति। प्रथमं तदीयावश्यकतानुसारेणैव तदीयं भाषाज्ञानमपि वर्धते। तदनु इतरेषामावश्यकता, सामा!जिकी राष्ट्रियावश्यकतेति विभिन्नावश्यकतामनुसृत्य तदीयं भाषाज्ञानं व्यवहारकौशलञ्च वर्धते। ध्वनिस्तु पूर्णतोऽनुकरणजन्य एव। प्रारम्भे शिशु-र्मात्रानुकरणेन किमपि पदं स्वीये मनसि स्थापयति, तस्य प्रयोगञ्च करोति। गच्छता कालेन तस्यार्थमवगच्छति, विचारपूर्वकं प्रयुङ्क्ते च। एवंविधिना

शिशुः प्रथमं व्याकरणं नाधीते, व्यवहारेणैव भाषामवगच्छति, मनसि निधाय व्यवहरति च।

अतोऽध्यापको भाषाशिक्षणावसरे पदानि परिचाययेद् बालकेभ्यः प्रयुक्तान् शब्दान् श्रोतुं प्रयोक्तुञ्चावकाशं कल्पयेत्। एतेन तेषां मनःसु शब्दा ध्वनियुक्ताः सुस्थापिता भवेयुः। छात्राः स्वयमेवानुभवेयुर्व्यवहारेण प्रक्रियया चावश्यकतानुसारं भाषाम्। भाषाशिक्षणे वातावरणं स्वतन्त्रं प्राकृतिकञ्च स्यात्। अतः शिक्षकः छात्रेषु तथा व्यवहरेत्, तादृशान् प्रश्नांश्च पृच्छेत्, यैश्च छात्राः प्रभाविताः प्रेरिताश्च सन्तो भाषामवबुध्येरन्। इयं सामान्यकुशलता उत्तरोत्तरं छात्रान् प्रेरयति व्यवहारकौशलञ्च जनयति। यथा पैनफील्डमहोदयेन उक्तम्—'या काऽपि वा भाषा भवतु क्रियाद्वारा शिक्षणीया, किमवगम्यते नेति अविचिन्त्य मातृभाषांवत् प्रयोक्तव्या तथैव भाषायां गतिर्वर्धेत, इति।

यद्यपि भाषाशिक्षणं व्यवहाराधीनं तथाऽपि भाषायां विशेषाधिकारप्राप्तये, प्रयोगवैशिष्ट्याय च व्याकरणं महदावश्यकम्। यतो मौखिकप्रवृत्तीनां शाब्दिकं विवरणमेव व्याकरणम्, व्याक्रियन्ते शब्दा अनेनेति व्युत्पत्तिः। मौखिकप्रवृत्तयः शब्दाः समुचितशाब्दिकविवरणपूर्वकं व्याक्रियन्ते अस्मिन् शास्त्रे इत्यर्थः। अतो भाषाशिक्षणे प्रौढतायै व्याकरणाय महत्त्वमविचार्यमेव।

संस्कृतभाषा राष्ट्रस्य सांस्कृतिकी भाषा, इतरासां भाषाणां जननी च मन्यते; किन्तु इतरा भाषाः कुत्रचित्प्रान्तेषु व्यवहारे परिलक्ष्यन्ते संस्कृतं न तथा, अतस्तस्य अनौपचारिकशिक्षणं न सम्भवति। व्याकरणेन विना संस्कृतं सुबोध्यं न भवति। संस्कृतव्याकरणस्य बहुविशेषतास्सन्ति। यथा, विभक्तय इतरासु भाषासु प्रत्यययोजनेन समानरूपेण सिद्ध्यन्ति। संस्कृते तावद् विभिन्नरूपेण अकारेकारादिशब्दानामाधारेण पुंलिङ्ग-स्त्रीलिङ्ग-नपुंसकलिङ्गभेदेन च विभक्तयः परिणता भवन्ति। एवं क्रियापदान्यपि आत्मनेपदपरस्मैपदादिभेदेन वैशिष्ट्यं भजन्ते। कर्मणि प्रयोगश्च बहुलतया संस्कृत एव दृश्यते। समासास्तद्धिताः कृदन्ताश्च संस्कृतव्याकरणस्यावधेयांशाः। लिङ्गवचनवैविध्यमपि वर्तते। एतादृश-विशिष्टव्याकरणस्य सुबोधाय भगवान् 'पाणिनिः' अष्टाध्यायीं व्यरचयत्।

लोकेऽपि जना व्याकरणस्य प्राधान्यं बहु मन्यन्ते, प्राचीनकाले व्याकरणज्ञानहीन उपहास्यतामेति स्म—

यस्य षष्ठी चतुर्थी च विहस्य च विहाय च।

यस्याहं च द्वितीया स्याद् द्वितीया स्यामहं कथम्।।

व्याकरणज्ञानं महत्पौरुष्यममन्यन्त जनाः, मन्यन्ते चेदानीमपि। भाषायाः पौरुष्यं तु व्याकरणमेव। अत एव—

यद्यपि बहुनाधीषे तथाऽपि पठ पुत्र व्याकरणम्।

स्वजनः श्वजनो मा भूत् सकलं शकलं सकृच्छकृत्।।

इत्युपदिश्यते अभिभावकैः। अन्ततोगत्वा व्याकरणमवश्यमेव अध्येयमिति तात्पर्यम्। निस्सन्देहं भाषा व्याकरणेनैव परिमार्जिता भवति। एवं संस्कृतभाषा बहुविशेषैः संश्लिष्टा। व्याकरणेन विना अस्यां भाषायामधिकारो न सम्भवतीति। अतः पाठशालासु पाठनावसरे संस्कृतशिक्षकैर्व्याकरणस्योपेक्षा न कर्तव्या।

संस्कृतभाषाशिक्षणे शुद्धोच्चारणस्य विशिष्टं महत्त्वम्। व्याकरणशास्त्रे ध्वनिविचारो महान् विस्तृतः परिलक्ष्यते। शिक्षका अध्यापनावसरे तथा प्रयतेरन्, यथा छात्रा ध्वनितत्त्वमवगत्य वर्णान् सम्यगुच्चरेयुः। उच्चारणशिक्षणे व्यक्तिगतमवधानमत्यावश्यकम्। कक्षायामाधुनिकदृश्यश्रव्यसाधनान्युपयुज्य स्वयञ्च वर्णान् सम्यगुच्चार्य प्रतिच्छात्रमुच्चारयितुं निर्दिश्याप्युच्चारणं सुस्पष्टं कारयेत्, यत उच्चारणकौशलं तावद् बाल्यमवलम्ब्यैव सौष्ठवं प्राप्नोति। शिक्षकः स्वयं मुखं व्यादाय जिह्वामूलकप्रयत्नान् प्रदर्श्योच्चारणं बोधयेत्। यतः संस्कृतं सर्वासां भारतीयभाषाणां मूलमतस्तत्रत्या वर्णविशेषाः प्रायेण इतरासु भाषासु तथैव दृश्यन्ते। यदि बाला मौलिकं वर्णोच्चारणं शुद्धमवगच्छेयुः, तदा संस्कृतेतर-भारतीयभाषाणां ध्वनितत्त्वावगमने च क्षमा भवेयुः।

संस्कृतमित्यस्य प्रकृतिप्रत्ययात्मकविचार इत्यर्थः। संस्कृत्य पदानि अन्वाख्यायन्त इति भाषाव्याख्यानावसरे प्रकृतिप्रत्ययान् विवेचयतीति संस्कृतम्।

अत इयं भाषा नाम्नैव व्याकरणप्रधाना वर्तते। व्याकरणं पुनः सूक्ष्मविज्ञानं वर्तते। योऽध्यापक एतत्सर्वमवगत्य सावधानेन व्यवहरति, स एव कुशलभाषाशिक्षको भवतीति निश्चप्रचम्।

सरस्वतीभवन-ग्रन्थमाला

[ ४९ ]

महामहोपाध्यायश्रीशङ्करमिश्रविरचितं

# भेदरत्नम्

सम्पादकः

डॉ. राजारामशुक्लः

निदेशकः, अनुसन्धान-संस्थानस्य

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये

वाराणसी



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वि.सं. २०६०

# नैवेद्यम्

द्वैताद्वैतकलहगाथा हि भारतीयदार्शनिकवाङ्मयस्याभिवृद्धौ महत्त्वपूर्णं स्थानमातिष्ठतीति वेवेत्त्येव विद्वल्लोकः। यद्यपि पूर्वं तत्त्वबुभूत्सामात्रेण प्रवर्तन्ते स्माचार्यास्तथापि गच्छता कालेन विजिगीषा परपराभवेच्छा वा विद्वत्समाजे पदं संन्यस्य जल्पवितण्डे अपि प्रादुरभावयत्। तत्त्वनिर्णये हि स्वसिद्धान्तस्थापनमिव तत्सम्बन्धि परमतनिराकरणमपि उपयुज्यत इति मन्वानैराचार्यैर्यथावश्यकं जल्पवितण्डे अप्यादृते। किन्तु श्रद्धा तु स्वसिद्धान्तस्थापने एव। यत्र क्वचन कटूक्तयः समाश्रितास्ता अति मनोविनोदाय न तु दौर्मनस्यप्रचोदिताः। तत्त्वनिर्णयप्रयोजकत्वाविशेषादेव वादस्येव जल्पवितण्डयोरपि महत्त्वमङ्गीक्रियते।

वस्तुतो भारतीयदर्शनसम्बन्धिनः कस्याप्यङ्गस्योपाङ्गस्य वा कमपि बिन्दुविशेषमाश्रित्य तन्मूलान्वेषणार्थं क्रियमाणा मीमांसा पर्यन्ततः श्रुतिं समालम्बते या हि संस्कृतवाङ्मयस्याखिलस्यापि मूलम्। वैदिकदर्शनं, विशिष्य पूर्वोत्तरमीमांसे श्रुतिमेव सर्वापेक्षया प्रबलप्रमाणत्वेन स्वीकुरुतः। ब्रह्मविद्या (उत्तरमीमांसा) तु सर्वात्मना श्रुतिमेव शरणीकरोति। स्वीयां समग्रामपि दार्शनिकगवेषणां प्रमाणयितुं श्रुतिवाक्यानि तत्रोदाह्रियन्ते। अत एव तस्या वेदान्तशास्त्रमित्यपि नाम। दर्शनस्य वेदाधारितायामस्यां प्रक्रियायां तत्त्वनिर्धारणार्थं द्वे विधे समाश्रिते श्रुतिमूला विधा तर्कमूला च। यद्यपि तर्कमूलाया अपि विधायाः फलं तत्त्वसाक्षात्कारद्वारा परमपुरुषार्थप्राप्तिरेव, तथापि तत्र तर्कः समाश्रियते। श्रुत्यविरोधी तर्कः श्रुतिसम्मत एव, श्रुत्या साधितेऽप्यर्थे संशयविपरीतभावनादिसत्त्वे तन्निवृत्त्यर्थं तर्कापेक्षायाः 'श्रोतव्यो मन्तव्य' इत्यादिना स्वयं श्रुत्यैवोक्तत्वात्। मननमत्रानुमानमेव, **''मन्तव्यश्चोपपत्तिभिः''** इत्याद्युक्तेः। अत एव **श्रीशङ्करभगवत्पादैः** जन्माद्यधिकरणभाष्ये **'सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रहणद्वार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवन्न निवार्यते'** इत्युक्त्वा **'पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाचार्यवान् पुरुषो वेद** (छान्दो, ६/१४/२) इति श्रुतिमुदाहृत्य तर्कस्य सहायकत्वमभिहितम्।

तर्कसाहाय्येन समीक्षापूर्वकं तत्त्वनिर्धारणस्य अस्याः प्रक्रियायाः प्रयोगः उत्तरवर्तिशास्त्रग्रन्थेषु प्रचुरतया उपलभ्यते। अस्या विधायाश्चरमोत्कर्षः **गङ्गेशोपाध्यायस्य तत्त्वचिन्तामणौ** दृष्टिगोचरो भवति। तत्समकालिकैः तदुत्तरवर्तिभिश्चाप्युक्तविधामाश्रित्य स्वीयचिन्तनधारायाः विकासः कृतः। विशेषतो

नैयायिकैः बौद्धैश्च अस्याः पद्धतेर्निपुणं विकासः कृतः, किन्तु यदा वेदान्तशास्त्रे अस्याः प्रवेशो जातः, तदाऽनया युक्त्याधार इव श्रुत्याधारोऽपि सम्प्राप्तः, येनास्या निर्दोषताऽव्यभिचारिता च प्रमाणिताऽभूत्। यतः केवलयुक्त्याश्रिते तर्के क्वचिद् व्यभिचारो मूलशैथिल्यं वा सम्भाव्यते, तदुक्तम्—

**यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः।**
**अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते।** इति (वा.प. १-३४)

किन्तु यस्तर्कः श्रुत्याश्रितः स सर्वथाऽव्यभिचरितमर्थं साधयितुं समर्थो भवति।

यतोऽस्यां प्रक्रियायां श्रुत्यभिमतिरपि अस्ति, अतः परवर्तिभिः सर्वैराचार्यैः स्वीयवैचारिकवर्चस्वस्थापनार्थमस्याः पर्याप्तं प्रयोगः कृतः। इत एव कथासु वादेन सह जल्पवितण्डयोरपि पर्याप्तं विकासोऽभूत्। स्वसिद्धान्तस्थापनापेक्षया परसिद्धान्तनिराकरणेऽस्या अधिकमुपयोगः, यतः 'उपपादनञ्च स्वपक्षसाधनपरपक्षनिराकरणाभ्यां सम्भवति' इति हि शास्त्रकारा मन्यन्ते। परपक्षनिराकरणमपि स्वपक्षसाधनस्योपाय इति प्रसिद्धम्। अत्र मुख्यतः संवादशैली समाश्रियते। आदौ शास्त्रीयसंवादस्य (Polemics) इयं प्रक्रिया नैयायिकबौद्धयोरेव मध्ये सीमिताऽऽसीत् किन्तु कालक्रमेण वेदान्ताद्यौपनिषच्छास्त्रेष्वपीयं प्राविशत्। आचार्यशङ्करभगवत्पादानां कालेऽपि बौद्धैः, सांख्यैः वैशेषिकैरिव भेदवादिभिरपि संवादक्रमस्य चिह्नानि दृश्यन्त एव। भेदवादिनो द्विप्रकारा अद्वैतिनिकाये प्रतिवादित्वेन संप्राप्यन्ते—पारम्परिकतार्किकाः गौतमादयः, आधुनिकतार्किका माध्वाश्च। माध्वा अपि यद्यपि तार्किकानेवानुसरन्तः प्रायेण तद्दर्शिता एव युक्तीः प्रदर्शयन्ति[1] तथापि तैरद्वैतवादं प्रबलप्रतिद्वन्दिनं मन्यमानैरत्यधिकं पराक्रान्तं भेदसाधने, पराक्रान्तञ्च बहु अद्वैतिभिरपि तत्खण्डने। प्रायशः सप्तशतवर्षात्मकः स्वर्णाक्षरैर्लेख्य इतिहासो मतद्वयेन सम्पादितस्य द्वैताद्वैतविमर्शवाङ्मयस्य।

तार्किकग्रन्थेष्वपि बहुत्र, प्रायः सर्वत्रैव विशकलितरूपेण भेदसाधनम्, अभेदनिरासो वा प्रतिपाद्यमानो दृश्यत एव। किन्तु तन्मात्रपरग्रन्थप्रणयने नाधिकमाचार्या आत्मानं व्यापारयन्। इदमिदानीं विदुषां करकमलेषु समर्प्यमाणं **'भेदरत्नम्'** इत्याख्यं ग्रन्थरत्नं विरचय्य **आचार्यशङ्करमिश्र**पादा अस्मिन् पथि दिग्दर्शनमिव व्यधासिषुः। यानि श्रुतिवाक्यानि अद्वैतसमर्थने अद्वैतिभिः उपस्थाप्यन्ते प्रायः सर्वाण्यपि तानि प्रकारान्तरेणार्थवर्णनपुरःसरम् आचार्येणास्मिन् ग्रन्थे भेदसिद्धौ प्रमाणत्वेन उपस्थाप्यन्ते। तथैवानुमानान्यपि भेदस्य सिद्धौ तत्पारमार्थिकत्वे च

१. अस्मिन् सन्दर्भे भेदरत्नस्थोऽयं पद्यांशोऽवश्यं ध्यातव्यः—
'भेदरत्नपरित्राणे तार्किका एव यामिकाः'। इति। पृ.सं.-१

प्रतिवादनिरासपूर्वकमत्रोपस्थापितानि विद्यन्ते। एतास्तावद् युक्तयः परवर्तिभिर्माध्वाचार्यैरप्याश्रिताः परिष्कृताश्च। एवं रीत्या ग्रन्थोऽयं द्वैतसिद्धिप्रक्रमस्य समग्रस्यापि स्रोतोभूत इति वक्तुं शक्यते।

अयं हि ग्रन्थो **भेदप्रकाशः** इत्यप्यभिधानं धारयतीति ग्रन्थकर्तुर्वचनैरेवावगम्यते। तथा हि—**खण्डनखण्डखाद्यटीकायां शाङ्करीत्याख्यायां** तैः स्वयमेवोक्तम्—**'विपञ्चितश्चायमुद्धारो भेदप्रकाशे'**[१] इति।

ग्रन्थममुं पूर्वपक्षीकृत्य अद्वैताचार्यैः **मधुसूदनसरस्वती**पादैस्तत्खण्डनपरः **'अद्वैतरत्नरक्षणम्'** इत्याख्यो ग्रन्थो विरचित इति सोऽप्यवश्यं समालोचनीयो विपश्चिद्भिः। ग्रन्थकार **आचार्यशङ्करमिश्र**स्तावद् दार्शनिकवाङ्मये मनागपि रुचिमावहतः कस्याप्यपरिचितो नास्तीति, बहु च बहुत्रोपलभ्यते तज्जीवनवृत्तकर्तृत्वादिविषय इति नात्रविस्तरभयात् तत्प्रस्तूयते।

यद्यपि ग्रन्थोऽप्यमितः प्रागपि विश्वविद्यालयेन प्राकाश्यमानीत आसीत् तथाप्यनेकदोषग्रस्तोऽपि बहूपयोगित्वात् सम्प्रति सर्वथा दुष्प्राप इति कृत्वा पुनः सुसम्पाद्य तं प्रकाशयितुं निरचैषम्। ग्रन्थेऽस्मिन् प्रदर्शिता युक्तीरधिकृत्य किञ्चिद् विवेचयितुमत्र चिन्तयताऽपि तस्याधिकविवरणसापेक्षतया प्रसङ्गान्तरे तत्प्रस्तोतुकामेनोपेक्षितम्। सम्पादनप्रकाशनप्रमादजन्यदोषभूयिष्ठोऽपि क्वचिदस्पष्टाशयोऽप्ययं ग्रन्थः क्वचिट्टिपणीभिः क्वचिच्च चिह्नविशेषैः यथामति यथासम्भवञ्च समीकृत्य सुसम्पाद्य चात्र प्रस्तूयते। यत्र तु स्वीयमसामर्थ्यमनुभूतं तत्र तेंऽशविशेषा दोषान् पश्यताऽपि मया विदुषां विवेचनाय तथैव त्यक्ताः। आशास्यते यद् विद्वांसस्तत्समीकृत्यास्मान् बोधयिष्यन्तीति। अत्रास्माभिः प्रयुक्ताश्चिह्नविशेषा इत्थं ज्ञातव्याः—१-क(ख), अर्थात् कस्थाने ख इति पठनीयम्। २ कख(ख?), अर्थात् 'कख' इति वाक्यस्थः 'ख' शब्दः नावश्यकः। ३-क[ख], अर्थात् 'ख' मातृकायामविद्यमानमप्यावश्यकत्वादत्र योजनीयम्। इत्यादि।

सोऽयमितरविलक्षणो द्वैतिनामिवाद्वैतिनामपि परमोपयोगार्हो विदुषां करकमलेषूपायनीक्रियमाणो भेदरत्नाख्यो ग्रन्थः सुधियां मुदमुद्वहतु यशश्च निर्मलं समासादयत्विति परमकरुणार्द्रां शारदाम्बां सम्प्रार्थ्य विरमामि।

इत्थं विद्वद्विधेयः

**राजारामशुक्लः**

---

१. खण्डनटीका, पृ.सं. १२५ (लाजरस, वाराणसी-१८८८)

महामहोपाध्यायशङ्करमिश्रविरचितं

# भेदरत्नम्

मायाऽविद्याप्रकृतिरिति यद् गीयतेऽदृष्टमेतत्

साहित्येन त्रिभुवनमयीं सृष्टिमेतां वितन्वन्।

आनन्दोऽहं चितिरहमिदं मन्मयं सर्वमित्थं

यः स्वं स्तौति श्रुतिमयगिरा तं नुमो भिन्नमीशम्।।१।।

मोक्षाय स्पृहयालवः श्रुतिगिरां श्रद्धालवोऽर्थे ऋजौ

तर्कोदर्कविभावनासु सुतरां व्याजेन निद्रालवः।

भेदे दृक्पथमागतेऽपि सहसा तन्द्रालवश्छान्दसाः

कैवल्यात् पतयालवः शृणुत सद्युक्तिं दयालोर्मम।।२।।

भेदरत्नपरित्राणे तार्किका एव यामिकाः।

अतो वेदान्तिनः स्तेनान्निरस्यत्येष शङ्करः।।३।।

देहादेस्तात्त्विकाद् भेदं सत्यमात्मन्यजानताम्।

मुमुक्षूणां न मोक्षोऽस्तीत्यतो भेदो निरूप्यते।।४।।

न सा धीः क्वचिदप्यस्ति यत्र भेदो न भासते।

अत एव न तन्मानं यन्न भेदप्रमापकम्।।५।।

तथा हि—'स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्य-स्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमस्पर्शमगन्धमर-समचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखमनामगोत्रमजरममरमभयममृतमरजोऽ-शब्दमविवृतमसंवृतमपूर्वमनपरमनन्तरमबाह्यं न तदश्नोति कश्चन न तदश्नोति कश्चन'[१] इति श्रुतावन्योन्याभावात्मकभेदस्यैव नञर्थत्वम्। तथा च स्थूलं यच्छरीरादि तद्भिन्नं ब्रह्मेत्यर्थः। एवमणु यन्मनःप्रभृति तद्भिन्नं ब्रह्मेत्यर्थः। ब्रह्मप्रक्रमाद् अस्थूलमिति स्थौल्यात्यन्ताभाववदित्यर्थ इति चेत्? तथापि वैधर्म्यभेदस्य

---

१. बृहदारण्योकपनिषद्,. ३।८।८।

नञर्थत्वं, तथा चान्योन्याभाव इत्यर्थः। भेदप्रतिपत्त्यर्थमेव हि वैधर्म्याभिधानम्, अन्यथा वैधर्म्याभिधानानर्थक्यप्रसङ्गात्। **न तदश्नोति कश्चनेति** तद् ब्रह्म कश्चन आत्मानं नाश्नोति न व्याप्नोति। न कश्चन तदश्नोति न वा कश्चिदात्मा तद्ब्रह्म व्याप्नोति केनाप्यात्मना क्षेत्रज्ञेन नैतत् सम्बध्यते, विभुनोः संयोगकारणान्यतरकर्मोभयकर्मावयवसंयोगाभावादिति[१] स्वरूपवर्णनम्।

एवं 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति[२] श्रुतिरपि भेदे मानम्। स पुरुषः मृत्योः संसारात् मृत्युं संसारमाप्नोति पुनः पुनः संसरतीति— य इह नानेव पश्यति न तु वस्तुगत्यैव नाना पश्यतीत्यर्थाद्, इवपदसंदानाद्, अन्यथा नाना पश्यतीत्येव स्यात्।

'स किल एको द्रष्टा अद्वैतो भवती'[३]ति श्रुतिरपि भेदपरा। अन्ये तु द्रष्टारः क्षेत्रज्ञा भेदवन्त इत्यर्थस्य स किलेत्यनेन ध्वननात्।

'तत्त्वमसी'[४]ति श्रुतिरपि भेदपरा, युष्मच्छब्दस्य गम्यमानस्य भिन्नसम्बोध्यविषयत्वात्।

'न तु तद्द्वितीयमस्ती'ति श्रुतिरपि भेदतात्पर्यिका, तद्ब्रह्म द्वितीयं नास्तीति धर्म्युपरागेण निषेधात्। अन्यथा हि द्वैतं नास्तीतिधर्मोपरागमात्रेण निषेधः स्यात्।

एवञ्च 'एकमेवाद्वितीयं ब्रह्मे'[५]ति श्रुतेरपि ब्रह्मातिरिक्तपदार्थनानात्वस्वीकार एव, ब्रह्मणि ब्रह्मप्रतियोगिकभेदस्यैव निषेधात् धर्मिविशेषसमभिव्याहारबलेन तथैव व्युत्पत्तेः। यथेह भूमण्डले एक एव नरपतिरिति वाक्याद्राजगतनानात्वव्यतिरेकः प्रतीयते, न तु हस्त्यश्वरथपदातीनामपि, यथा चेह कानने किंशुकतरुरेक एव न नानेत्यभिधाने किंशुकतरुगतमेव नानात्वं प्रतिषिध्यते, न तु शालतमालहिन्तालादिगतमपि।

एवम् 'एक एव तु भूतात्मा भूते भूते व्यवस्थितः' 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्याद्यपि भेदाविरोधिजन्ममरणप्रबन्धेन बाल्यकौमारभेदेन वा

---

१. संयोगं प्रति अन्यतरकर्म-उभयकर्म-संयोगाश्च (संयोगजसंयोगस्थले) कारणानि, तदभावात् विभुनोर्न संयोग इति भावः।

२. आनुपूर्वी तु 'सलिल एको द्रष्टा' इत्यादि न तु स किलेति मधुसूदनसरस्वतीपादाः।
—अद्वैतरत्नरक्षणे

३. बृह., ४।४।१९; कठ. ४।११।

४. छान्दोग्य., ६।८।७।

५. छान्दोग्य., ६।२।१।

भिन्नेषु शरीरेषु एक एव भूतः सत्यः आत्मा क्षेत्रज्ञो व्यवस्थितः, न तु देवदत्तयज्ञदत्तशरीरभेदेनात्मभेदवज्जन्ममरणप्रबन्धेन शरीरभेदेऽप्यात्मभेद इत्यर्थात्। यथा एकधा एकप्रकारोऽपि चन्द्रो बहुधा बहुप्रकारो दृश्यते तरङ्गप्रसङ्गे तथा तरङ्गवदतिचपलजन्ममरणप्रबन्धभिन्नशरीरावच्छिन्न एक एवात्मा बहुप्रकारो दृश्यते। तथा हि क्वापि जन्मनि राजाहं क्वापि स्थूलोऽहत्येकमेवात्मानमविद्याशरीराच्छरीरे समारोप्य बहुप्रकारवैचित्र्येणावेदयति।

एवञ्च 'द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव च' इति श्रुतेर्भेदोऽर्थः स्फुट एव।

तथा—

द्वा सुपर्णा सुयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।।

इति श्रुतिः साक्षादेव भेदमाह। किञ्च यत्र श्रुतौ प्रकृत्यर्थः प्रत्ययार्थो वा द्विबहुत्वादिः, तत्र भेदाविनाभूतधर्मप्रतिपत्तौ भेदप्रतिपत्तिरावश्यकी। यथा—'सहस्रशीर्षा पुरुषः' इत्यत्र प्रकृत्यर्थो बहुत्वं 'विश्वेदेवा स आगच्छत' इत्यादौ प्रत्ययार्थः। क्वापि सम्बन्ध एव भेदाविनाभूतः प्रतीयते, यथा 'तद्विष्णोः परमं पदम्, इत्यादौ। यथा वा 'अग्नेरपत्यं प्रथमं हिरण्यम्' इत्यादौ। क्वचित्कार्यकारणभाव एव भेदाविनाभूतः प्रतीयते, यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादीनां सर्वेषां विधिवाक्यानाम्।

एवं स्तुतिनिन्दापरकृतिपुराकल्पभेदेन भिन्नस्यार्थवादस्यापि भेदो भेदाविनाभूतो वाऽर्थ आवश्यकः। यथा 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इति स्तुतौ कार्यकारणभावः। 'एष वाव प्रथमो यज्ञानां ज्योतिष्टोमोऽथानेन हुत्वा योऽन्यो जुहोति सोन्धं तमः प्रविशती'त्यादि निन्दायाम्। एवं परकृतिपुराकल्पयोरपि।

किञ्च 'मैत्रेयि आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च' इति प्रश्नोत्तरमुखेनोपनिषदवतारो भेदमन्तरेणानुपपन्नः, न हि ज्ञाते प्रश्नो नाप्यज्ञाते उत्तरम्। अतः प्रष्टुरपेक्षया उत्तरयितुः प्रसिद्ध एव भेदः। श्रवणादिप्रतिपत्तीः परस्परभिन्ना विदधती श्रुतिरपीयं भेदमन्तरेणानुपपद्यमाना। न ह्यमूषामभेदे विधिचतुष्टयमुपयुज्यते। तथा सति श्रोतव्य इत्येव वा ब्रूयात्।

तथा च न सा श्रुतिर्यत्र शब्दबलादर्थबलाद्वा भेदो न भासत इति।

किञ्च न सा धीः यत्र भेदो न विषयः। तथा हि विशिष्टज्ञानानां वैशिष्ट्यविषयतयैव भेदविषयता। वैशिष्ट्यस्य पदार्थान्तरत्वानुपपत्तौ

परिगणितभावपदार्थानन्तर्भावेऽतद्व्यावृत्तिरूपान्योन्याभावाख्यभेदरूपतैव वाच्यां। तथा च वैशिष्ट्यविषयकज्ञानानां सिद्धा भेदविषयता। तदाहुराचार्या **गुणकिरणावल्याम्**-'अतद्व्यावृत्तिर्वैशिष्ट्यम्' इति[१]। निर्विकल्पकानन्तरभाविनो घटोऽयमिति सविकल्पकस्य कथमतद्व्यावृत्तिः पूर्वाज्ञाता विषय इति चेत्? न, वैशिष्ट्यविषयत्वान्यथानुपपत्त्या संज्ञास्मरणस्यैव निर्विकल्पकसमनन्तरकालीन-स्यातद्व्यावृत्तिविषयत्वकल्पनात्। सर्वतो ह्यन्यथानुपपत्तिर्बलीयसी। एवं सत्यन्यापोहः पदार्थः स्यात्—तथा च जितं बौद्धैरिति चेत्? न, गोत्वादीनां पदादनुपस्थितौ वैशिष्ट्यमपि कस्य भासेत येनान्यापोहभाननैयत्यं स्यात्। तथा च बौद्धपक्षादयमेव भेदः यत् तैरन्यापोह एव पदार्थतावच्छेदको धर्मोऽङ्गीक्रियते, अस्माभिस्तु गोत्वादिरिति। निर्विकल्पकधियां यद्यपि न वैशिष्ट्यं विषय इति अन्योन्याभावो भेदो न भासते, तथापि स्वरूपभेदो घ(प)टादिवैधर्म्यञ्च घटत्वादिर्भासते। तेनैव भेदविषयता। तदपि भेदत्वेन न भासत इति चेत्? यत् किञ्चिदेतत्।

तदेवं सर्वधियां भेदविषयत्वे सिद्धे सर्वप्रमाणानां भेदप्रमापकत्व-मयत्नसिद्धम्।

तदेवं शरीरादिभिन्नत्वेनापि श्रुत्या समधिगतस्यात्मनो ब्रह्मणोऽनु पश्चादीक्षणं मननमन्वीक्षा इति व्युपत्त्या मन्तव्य इति विधेरन्वीक्षाध्ययनमेव विषयः, प्रकारान्तरेण मननानुपपत्तेर्विध्यनिर्वाहात्। वेदान्तशास्त्रन्तु मुमुक्षूणां तत्त्वज्ञान-विरोध्यर्थोपस्थापकतयाऽनादेयमेव। यदि तु तैर्थिकप्रवृत्त्यनुरोधात् कथञ्चिदुपादेयता तदा श्रोतव्य इति विधिविषयतयैव श्रुत्यक्षरार्थव्याख्यानमात्रपरत्वान्न तु मन्तव्य इति विधिविषयतया युक्तिवैधुर्येण मननासंस्पर्शात् मन्तव्यश्चोपपत्तिभिरित्यनेन मननस्योपपत्तिसाध्यत्वावगमात्।

ननु भेदश्चेद् युक्तिं न सहते तदा श्रुतिवाक्यानामपि भेदप्रतिपादकत्वेन त्वयोपदर्शितानां तात्पर्यान्तरमेवोन्नेतुमर्हतीति चेत्? युक्तिं न सहत इति कोऽर्थः? किं भेदानुभव एव नास्ति—सन्नपि वा न यथार्थः। न तावदाद्यः, घटात्पटो भिन्न इत्यादिभेदानुभवस्य लौकिकपरीक्षकसाधारणस्यापलापानर्हत्वात्। नापि द्वितीयः, अयथार्थता हि विषयबाधकगम्या, बाधकश्च विपरीतप्रमा। सा च प्रकृते प्रात्यक्षिकी तावन्नास्ति, घटः पटो न भवतीति प्रत्यक्षानन्तरं घटः पट एवेति

---

१. गुणकिरणावली, संख्यानिरूपणम्।

विपरीतप्रत्यक्षस्याभावात्। ननु नीलन्तम इति प्रत्यक्षानन्तरं नेदं नीलन्तम इति प्रात्यक्षिकबाधाभावेऽपि यथा तव मते तद्बाध्यत्वम्, एवमहं स्थूलो गौरो वेत्याद्यहंप्रत्ययानन्तरं (न हि?) न स्थूलो गौरो वेति प्रात्यक्षिकबाधाभावेऽपि भ्रान्तत्वम्—तथा प्रकृतेऽपि स्यात्, यौक्तिकबाधस्योभयत्रापि तुल्यत्वादिति चेत्? मैवं, भेदबाधकयुक्त्यभावात्।

नन्वस्ति सा, तथा हि भेदवत्तया घटादयो भिन्ना इत्यभिधीयते। तत्र भेदोऽभिन्ने भिन्ने वा वर्तते। न तावदाद्यः, विरोधात्। न ह्यभिन्नं भिन्नं भवति। द्वितीये तु तद्भेदभिन्ने तद्भेदवृत्तौ कथं नात्माश्रयः। स्वविशिष्टे स्ववृत्तावंशतः स्ववृत्तेः। भेदान्तरेण भिन्नेऽधिकरणभेदवृत्त्यभ्युपगमे तत्राप्येवमभ्युपगमेन कथं नानवस्था। एकेन भेदेन भिन्ने द्वितीयस्तेन च भिन्ने प्रथमो भेद इत्यात्माश्रयानवस्थयोः परिहारेऽप्यन्योन्याश्रयः। बहवो भेदा युगपदेव ज्ञायमानं वस्तु परिरभन्त इत्यभ्युपगमेऽपि किं भेदविशिष्टे को भेदो वर्ततामिति तेषामन्योन्यकलहो दुस्समाधिः। प्रथमेनैव भेदेन भिन्ने वस्तुनि द्वितीयादिभेदाभ्युपगमे वैयर्थ्यम्। उत्तरोत्तरभेदाभ्युपगमे च कृतकरत्वेन पूर्वपूर्वभेदविलोप इति चेत्?

मैवं, 'वर्तते' इति संयोगलक्षणां समवायलक्षणां वा वृत्तिमधिकृत्य यदि प्रश्नस्तदान्योन्याभावात्मको भेदो न वर्तत इत्येवोत्तरम्, अभावस्य संयोगसमवाययोरनङ्गीकारात्। अथ स्वरूपलक्षणवृत्तिमधिकृत्य प्रश्नस्तदा घटः स्वभावनियमान्नित्येनान्योन्याभावेनोपरक्तो भासत इत्येवोत्तरम्। उत्पन्नमात्रो घटः कथं भिन्नः स्यात्, भेदेन सम्बन्धाभावादिति चेत्? उत्पन्नमात्रः कथं घटोऽपि? घटत्वेन सम्बन्धाभावादिति तुल्यम्। उत्पत्तिक्षण एव घटत्वेन सह घटः सम्बद्धो जातः सम्बद्धश्चेत्येकः[1] कालः इति चेत्? उत्पत्तिक्षण एव भेदेनापि सम्बद्ध एव जातः सम्बद्धश्चेत्येकः[2] काल इति तुल्यम्। विशेषश्च तत्र समवायः अत्र स्वरूपसम्बन्धः। स च सम्बन्धान्तरमन्तरेणोपरक्तप्रत्ययजननयोग्यत्वमेव। उत्पत्तेः पूर्वं कीदृगासीद् घट इति चेत्? नासीत्। तर्हि तदन्योन्याभावोऽपि कथमासीत्? यथा तत्प्रागभावो यथा वा तस्य जातिः। सा तज्जातीयान्तरनिष्ठासीदिति चेत्? प्रलये कथमासीत्? एवमेवेति चेत्? उत्पत्स्यमानघटान्योन्याभावोऽपि तथैवासीत्। घटत्वादावपि वयं विप्रतिपद्यामहे इति चेत्? तर्हि बौद्धनिरासवत्तवापि निरासो न दुष्करः। परन्त्वस्माकमिह भेदमात्रं सिषाधयिषितमिति।

यद्वा तद्भेदभिन्ने घटे स भेदो वर्तत इत्येवोत्तरम्। आत्माश्रयस्तदेति चेत्? न, तद्भेदे तद्भेदानङ्गीकारात्। तद्विशिष्टे तद्वृत्तावात्माश्रयोंऽशत इति चेत्? न,

१-२. अत्रोभयत्र 'सम्बन्धश्चे'त्यादिपाठः सम्भवतो भवेत्।

यद्विशेष्यवृत्ति तद्विशेषणवृत्तीति नियमानङ्गीकारात्। न हि घटे रूपमित्युक्ते घटत्वेऽपि रूपमिति वस्तुगतिः प्रतीतिर्वा, [ न वा ] दण्डः पुरुषे दण्डिनि इत्युक्ते दण्डेऽपि दण्डसम्बन्धः प्रतीयते। तत्र घटत्वदण्डयोरुपलक्षणत्वं न विशेषणत्वमिति चेत्? अत्राप्यापाततस्तथैवास्तु।

वस्तुतस्तु विशेषणत्वेऽपि न दोषः। प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकव्यवच्छेदकत्वं स्वकालनियतव्यावृत्तिबोधजनकत्वं वा विशेषणत्वम्। तच्च विशेष्यवृत्तिधर्मानधिकरणतायामपि सम्भवत्येव। तथा च तद्भेदानाश्रितोऽपि तद्भेदस्तद्भेदवदाश्रितो भविष्यतीति न विरोधः। तद्भेदसम्बन्धात्पूर्वमसम्बद्धः स भेदो विशेषणमपि कथं, न ह्यसम्बद्धं विशेषणं नामेति चेत्? भेदस्यान्योन्याभावस्य नित्यत्वेन नित्यसम्बद्धत्वात्तद्भेदसम्बन्धात्पूर्वमित्येव नाङ्गीकुर्मः। सम्बन्धिनो घटस्यानित्यत्वेन कथं नित्यः सम्बन्धः इति चेत्? अतीतेनानागतेन[१] च प्रतियोगिना विशिष्टप्रतीतिदर्शनात्, विशिष्टप्रतीतेः सम्बन्धसाध्यत्वात्। अन्यथा घटस्य प्रागभावो घटस्य ध्वंस इति प्रत्ययो न स्यात्। तत्किमनुत्पन्नस्यापि घटस्योपरक्तप्रत्ययजननयोग्यत्वमस्तीति चेत्? कः सन्देहः, यावता ज्ञानविषयत्वस्यैव योग्यतावच्छेदकत्वं—तच्चानुत्पन्नस्याप्यस्त्येव। अत्र किं नियामकमिति चेत्? वस्तुस्वभाव एव। वस्तुस्वाभाव्याद्वैपरीत्यमेव किं न स्यादिति चेत्? न, प्रतीतिनियतत्वात्स्वाभाव्यस्य। न ह्युत्पत्स्यते घटो विनष्टो घट इति त्वया न प्रतीयते। यथा चानुत्पन्नयोरपि सम्बन्धिनोः समवायः पूर्वमासीदेव [तथा] अनुत्पन्नस्यापि घटस्य भेदसम्बन्धः सार्वदिकः। परन्तु समवायः सम्बन्धिभिन्नः, अयन्तु सम्बन्धात्मको ज्ञानविशेषात्मको वेति न किञ्चिदनुपपन्नम्। समवायेऽपि समविप्रतिपत्तिरिति चेत्? भवतु नाम। तदर्थमिह न यतिष्याहमे[२]। एवञ्च सति रूपवति रूपं रसवति रसो गवि गोत्वमित्याद्युपलक्षणत्वविशेषणत्वाभ्यामुपपाद्यम्।

यद्वा अभिन्ने भेदो वर्तत इत्येवोत्तरं पूर्वप्रश्नस्य। न हि स्वस्मादपि घटो नाभिन्नः। पटप्रतियोगिको भेदः पटाभिन्ने घटे वर्तते पटभिन्ने वेति विशिष्य प्रश्ने कृते सामान्येन नोत्तरं घटत इति चेत्? न, अनुन्मत्तस्यैतादृशप्रश्नानुपपत्तेः। विरोधितावच्छेदकप्रकारेणोपस्थितस्य धर्मिणो विरुद्धप्रकारावच्छेदत्वे प्रश्नस्यादृष्टचरत्वात्। न हि भवति प्रश्नो मृन्मयोऽयं घटस्तेजोमयो न वा,

---

१. केचित्तु 'अतीतेन चेति' पाठो युक्त इति मन्यन्ते, तन्न युक्तं भाति, अनुपदं वक्ष्यमाणाया घटस्य प्रागभाव इति प्रतीतेः अनागतेनैव प्रतियोगिना निर्वाहात्।

२. समवायस्यान्यत्र निपुणं प्रसाधितत्वादिति भावः।

ब्राह्मणोऽयं चैत्रः शूद्रो न वेति। अन्यथा विज्ञानात्मकं ब्रह्म जडं न वा, सुखात्मकं ब्रह्म दुःखात्मकं न वेति पृच्छतो युक्तिशतेनापि त्वया साध्यमाने विज्ञानसुखात्मकत्वे पृच्छानिवृत्तिर्न स्यात्। यदि चाहृदयस्य कदाचिदेवंविधप्रश्नसम्भवस्तदोत्तरं दत्तमेवान्वेष्टव्यम्।

भेदः कुत्र वर्तत इति प्रश्ने यत्र प्रतीयत इत्युत्तरम्। कुत्र प्रतीयत इत्यत्र यत्र वर्तत इत्याद्युत्तरवैचित्र्यं वार्तिकानुसारेण द्रष्टव्यम्।

दुर्दुरूढवेदान्तिनस्तु खण्डनयुक्त्यैव निरसनीयाः। सा च—भेदः प्रतीतो न वा यमधिकृत्य प्रश्न इत्यादि सञ्चारात्मिका। न चैवं सति खण्डनयुक्तीनामेव बलवत्त्वं प्रतिपादितं स्यादिति वाच्यं, भवतु नाम तथापि तवैवं प्रतिभाशोषे मया विजयरूपस्य फलस्य तदानीं तावतैव प्रतिलम्भात्। तत्र निर्णयस्त्वनुन्मत्तैरेव वादिभिः सह कर्तव्य इति।

अस्तु वा प्रतिप्रश्नः। तथा हि अभेदो नाम धर्मो भिन्ने ब्रह्मणि वर्तते अभिन्ने वा। आद्ये तद् ब्रह्म पूर्वं भिन्नमासीत्कथं पश्चादभिन्नं स्यादिति विरोधः। द्वितीये तेनैवाभेदेनाभिन्ने अभेदान्तरेण वा? आद्ये अंशतः आत्माश्रयत्वम्। द्वितीये अनवस्था। अथ यद्येकदैव सर्वे अभेदाः ब्रह्म परिरभन्ते तदा किमभेदाभिन्ने कोऽभेदो वर्तत इति तेषामन्योन्यकलहं कः समादध्यात्। अभेदभूयस्त्वे च भेदपर्यवसान-मित्यधिकं दूषणम्।

अथाभेदो ब्रह्मणि वर्तत इति नाङ्गीकुर्मः किन्त्वभेदस्वरूपमेव ब्रह्म, तथा च नामी दोषा इति चेत्? तर्हि ममाप्यन्योन्याभावोऽस्त्रं मनाग्विश्राम्यतु। स्वरूपभेदास्त्रमादायैव योत्स्ये।

तथा च घटस्वरूपस्यैव भेदत्वाङ्गीकारे वृत्तिविकल्पमुखमुद्रणमस्तु। अन्यस्वभावस्य घटस्यैव भेदत्वेऽन्यसाकाङ्क्षस्वाभाव्यं स्यादिति चेत्? ब्रह्मणोऽभेदस्वभावत्वे घटाभिन्नं ब्रह्मेत्यन्यसाकाङ्क्षतापत्तिस्तुल्या। ब्रह्मत्वेन निरूप्यमाणं ब्रह्म अन्यासाकाङ्क्षम्, अभेदत्वेन तु तन्निरूप्यमाणमन्यसाकाङ्क्षमस्तु। को विरोधः। प्रकारभेदमादायाविरोध इति चेत्? तर्हि [भेदोऽपि] घटत्वेन निरूप्यमाणोऽन्यसाकाङ्क्षोऽस्तु, भेदत्वेन तु निरूप्यमाणोऽन्यासाकाङ्क्षोऽस्तु, को विरोधः, प्रकारभेदमादायाविरोधस्य तुल्यत्वात्। केवलं मम घटत्वभेदप्रकारयोर्भेदोऽस्ति तव सोऽपि दुर्लभ इति विशेषः। अभिन्नं ब्रह्म अभेदो वा ब्रह्मेति कथमन्यसाकाङ्क्षतेति चेत्? भिन्नो घटो भेदो वा घट इत्यपि

कथमन्याकाङ्क्षमिति तुल्यम्। कस्मादयं भेद इति तव पक्षेऽस्याकाङ्क्षेति चेत्? ब्रह्म केनाभिन्नमित्याकाङ्क्षायास्त्वत्पक्षेऽपि सत्त्वात्। भेदस्वरूपञ्चेद् घटः, तदा भिन्नो घट इति भेदविशेषणिका प्रतीतिः कथमिति चेद्? अभिन्नं ब्रह्मेत्यभेदविशेषणिका प्रतीतिस्तवापि कथमिति तुल्यम्।

ननु घटादिस्वरूपञ्चेद्भेदस्तदा तं तमात्मनि निवेशयेत्। न हि निष्प्रतियोगिकं घटादिस्वरूपं भेदः। तथा च सति भेद एवैतन्न स्यात् निष्प्रतियोगिकस्य भेदस्य त्वयानभ्युपगमात्, अभ्युपगमे वा परिभाषापत्तेः। तथा च पटप्रतियोगिकं घटस्वरूपं भेद इत्यर्थपर्यवसानेऽपि पटोऽपि घटस्वरूपं स्यात्। अतो भेदावतारायासोऽभेदसाधनपर्यवसायीति महातार्किकत्वम्। एवञ्च घटरूपस्य भेदस्य (स?) प्रतियोगी (गि) पटस्य स्वरूपमित्यनया दिशा पटोऽपि घटस्वरूपमग्न एवेत्यभेद इति चेत्?

मैवं, पटप्रतियोगिकं घटस्य स्वरूपं भेद इत्युच्यमानेऽपि पटः प्रतियोगी यस्येति बहुव्रीहिसमासाश्रयणादेव समस्यमानपदार्थीभूतात्पटादन्यपदार्थो घटो भिन्नत्वेन त्वयैवोपदर्शित इति त्वयैवाभेदापादनस्यापहस्तितत्वात्, समस्यमानपदार्थादन्यस्यैव बहुव्रीह्यर्थत्वात्। न हि चित्रगुर्देवदत्त इत्युक्ते चित्रया गवापि देवदत्तस्याभेदः प्रतीयते, किन्तर्हि? गोर्विशेषणमात्रम्। प्रकृतेऽपि घटभेदत्वेन घटस्वरूपे निरूप्यमाणे पटस्य विशेषणत्वमात्रमभ्युपेतं नाभेदोऽपीति। एवं घटस्वरूपभेदप्रतियोगी पट इत्युक्ते कथं पटस्य घटात्मत्वं, पूर्वयुक्तेः सत्त्वात्। तथा च यद्यद्वचनमुच्चार्य त्वया पटस्वरूपे घटो घटस्वरूपे पटोऽन्तर्निवेशनीयः तेन तेन त्वद्वचनेनैव [ मया ] तयोर्भेदो व्यवस्थापनीय इति यथा यथा तव भेदनिरासाय प्रयत्नस्तथा तथा धृष्टबालक इव पुरोवर्ती भेद इति।

अन्यसाकाङ्क्षतापत्तिविभीषिकापि निरस्तैव। केयमन्यसाकाङ्क्षता नाम। घटादयो निष्प्रतियोगिकास्त एव चेद्भेदाः स्युस्तदा सप्रतियोगिकाः स्युः, अभाववत्समवायवदिति चेद्भवतु(न्तु) नाम सप्रतियोगिकाः। न नः किञ्चिद्बाध्यते। न हि स्व[ ा ]भावाभावत्वेन निरूप्यमाणान् घटादीनपि सप्रतियोगिकान्नाङ्गीकुर्मः। तर्हि अभाववदेवेतरनिरूपणाधीननिरूपणाः स्युः सविकल्पमात्रविषयाश्चेति चेत्? तत्किं सप्रतियोगिकपदार्थस्यायं नियमो यदितरनिरूपणेनैव निरूप्यते? तथा सति प्रमेयत्वाभिधेयत्वादिनापि निरूप्यमाणा अभावसमवायादय इतरनिरूपणमपेक्षेरन्। न वयं सप्रतियोगिकत्वं निष्प्रतियोगिकत्वं वा वस्तुनः स्वाभाविकमेवाङ्गीकुर्मः, किं तर्हि? यत्प्रकारावच्छेदेन यज्ज्ञानं नियमतो यद्विशिष्टज्ञानमपेक्षते तत्प्रकारावच्छेदेन

तद्वस्तु सप्रतियोगिकमिति ब्रूमः। यथा च स एव घटो घटत्वेन ज्ञायमानो नियमतो नान्यविशिष्टज्ञानमपेक्ष्य ज्ञायते। ततो घटत्वावच्छेदेन निष्प्रतियोगिक इत्यभिधीयते। स्वाभावाभावत्वेन ज्ञायमानो घटो नियमतः स्वाभावाभावज्ञानमपेक्ष्यैव ज्ञायत इति तेन सप्रकारेण (प्रकारेण[1]) सप्रतियोगिक इति। यद्यपि वह्नित्वेन वह्निज्ञानमपि कदाचिद् धूमज्ञानपेक्षतेऽनुमितिरूपम्, अतो वह्नित्वेन वह्निः सप्रतियोगिक एव स्याद् इत्युक्तं **नियमत** इति। न हि प्रात्यक्षिकमपि वह्नित्वप्रकारकज्ञानं[तद]पेक्षं येन धूमो वह्नेः प्रतियोगी स्यात्। यद्यपि वह्नित्वनिर्विकल्पकं वह्नित्वविशिष्टज्ञानं नियमतोऽपेक्षते इति वह्नित्वमपि वह्नेः प्रतियोगि स्यात्, तथापि न तद् विशिष्टज्ञानमित्यपेक्षणीयज्ञाने वैशिष्ट्यं विशेषणमुपात्तम्। अन्यत्र गोत्वाश्वत्वादौ सहानवस्थानरूपविरोधकृत एव प्रतियोगित्वव्यवहारः, क्वचिद्वध्यघातकत्वादिकृत इति। यद्येवं तर्हि घटादयो निष्प्रतियोगिकाः, घटाभावादयश्च सप्रतियोगिका इत्यत्र किङ्कृतो व्यवहारभेद इति चेत्? न, यत्पदार्थस्य यदसाधारणं वाचकपदं तत्र यत्प्रवृत्तिनिमित्तं तत्प्रकारकज्ञानस्येतरविशिष्टज्ञानसापेक्षत्वनिरपेक्षत्वप्रयुक्त इति गृहाण। यद्यपि प्रमेयपदं संयोगस्यासाधारणं वाचकं न भवति तथापि गुणादिपदं तथा भवतीत्यदोषः। तत्सिद्धमेतद्घटादय एव स्वरूपभेदास्तत्त्वेन ज्ञायमानाः सप्रतियोगिका इति। ननु स्वरूपं भेद इति स्वरूपभेदस्याननुगतस्यानुगतधर्म-व्यतिरेकेण कथं समयग्रहस्तथा च स्वरूपं भेद इत्युक्ते कस्य स्वरूपस्य प्रतिलम्भः स्यात्सकलाप्रतीतौ च तत्स्वरूपं भेदज्ञेनापि स्वरूपभेद इति पदेन न व्यवह्रियेतेति चेत्? न, स्वरूपभेदपदस्य स्वरूपत्वेन प्रवृत्तिनिमित्तेन उपलक्षणेन वा प्रवर्तमानस्य स्वरूपत्वावच्छिन्नाशेषव्यक्तिपरस्य प्रकरणसमभिव्याहारादिवशात्तत्र घटादिव्यक्त्युपस्थापकत्वात्। स्वरूपत्वञ्च स्वनिष्ठधर्मात्यन्ताभावासमानाधिकरण-धर्मवत्त्वमेव। स्वनिष्ठो यो धर्मः तस्य योऽत्यन्ताभावस्तदसमानाधिकरण-धर्मवत्त्वमिति यावत्। अत एव घटस्वरूपं न पटः तस्य घटनिष्ठ-धर्मात्यन्ताभावसमानाधिकरणधर्मवत्त्वात्, न वा घटान्तरस्वरूपं घटान्तरं, तत्राप्येकतरधर्मस्यापरत्रात्यन्ताभावनैयत्यात्। न च घटनिष्ठसंयोगात्यन्ता-भावसामानाधिकरण्यात्तद्घटत्वस्य तद्घटोऽपि तद्घटस्वरूपं न स्यादिति वाच्यम्, अत्यन्ताभावपदेन प्रतियोग्यसमानाधिकरणात्यन्ताभावस्य विवक्षितत्वात्। अभावस्यापि यया कयाचिद्प्रत्यासत्त्या स्वनिष्ठधर्मात्यन्ताभावसमानाधि-करणधर्मवत्त्वस्य विद्यमानतया स्वरूपशब्दवाच्यत्वम्। अत एव स्वरूपमित्युक्ते सकलस्वरूपोपस्थितौ विशेषप्रतिपादनाय घटस्वरूपं पटस्वरूपमिति तत्तत्समभिव्याहारप्रयत्नः।

---

१. रूपेणेत्यर्थः।

अयमेव च धर्मो घटस्वरूपस्य भेदत्वम्। एतत्प्रकारावच्छेदेन ज्ञायमानो घट इतरनिरूपणाधीननिरूपणोऽनन्वसंहितोपाधेरुपहितप्रत्ययायोगाद्भिद्यत इति योगं पुरस्कृत्यान्योन्याभावस्वरूपभेदवत्तया घटादिर्भेद:। भेदस्तु भेदनत्वादत्रान्योन्याभावेत्यभिधाने, अन्योन्याभावविरहिणां भेदवत्त्वाभावाद्भिद्यत इति योगविधुराणां भेदो न स्यादित्यस्माकं स्वरूपभेदोपपादनायास इति।

ननु स्वरूपञ्चेद्भेदस्तदा शुक्तिस्वरूपे दृष्टे रजताद्भेदो गृहीत इत्यभेदारोपो न स्यात् न स्याच्च दूरादनभिव्यक्तकरचरणादिपुरुषस्वरूपे दृष्टे स्थाणुर्वा पुरुषो वेति संशय इति चेत्? मैवं, न हि भेदमात्रं संशयविपर्ययविरोधि, किं नाम? आरोप्यारोपविषयगतधर्मयोरन्योन्यस्मिन्नभावदर्शनम्, आरोप्यधर्मस्यारोप्यविषयव्यतिरेकदर्शनं वा, भेदत्वेन दर्शनं वा, आरोप्यधर्माधिकरणारोपविषययोरन्योन्याभावदर्शनं वा, तथैवावधारणात्। तथा च स्वरूपभेदग्रहे संशयविपर्ययौ न स्यातामिति रिक्तं वच:।

ननु यदि प्रतियोगिना निरूप्यमाणो घट एव भेद: स्यात् तदा केनापि प्रकारेण निरूप्यमाणं नीलमपि पीतं भवेदिति चेत्?, न, आपादकाभावात्। अविरुद्धयोर्घटत्वभेदत्वयो: समावेशवन्नीलपीतत्वयोरपि समावेश: स्यादिति जात्युत्तरस्य व्याप्त्यमूलकत्वात्। यथा च नीलपीतयोर्नीलत्वपीतत्वयोर्वा परस्परपरिहारकत्वं नियमेनास्माभिरङ्गीक्रियते तथा घटत्वभेदत्वयोश्चेत्त्वयाङ्गीक्रियते तदा तावतैव सिद्धे भेदविवाद एवावयो: पर्यवस्येत्।

यच्चोक्तं भेदोल्लेखस्याभेदोल्लेखनान्तरीयकतयाऽभेदोल्लेखांश एव ज्ञानस्य प्रामाण्यं न तु भेदोल्लेखांशेऽपीति, तद्विपरीतम्, अभेदप्रत्ययस्य भेदविषयतानैयत्यात्। न हि भेदमनुल्लिख्याभेदपदादभेद इति धी: सम्भवति, प्रतियोगितया भेदभानावश्यकत्वात्। भेदे तु प्रतीयमाने अभेदभानमनावश्यकम्। न हि भेदपदाद् भेदे प्रतीयमानेऽभेदप्रमा, तस्यापदार्थत्वात्। सर्वधियाञ्च भेदविषयत्वं वैशिष्ट्यविषयतया प्रागेव दर्शितम्। तस्मात्—अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमेति मनोरथमात्रमिति।

घटपटौ न भिन्नाविति प्रतीतौ पारमार्थिकभेदनिषेधोऽपारमार्थिकभेदनिषेधो वा। उभयथा भेदसिद्धि:। पारमार्थिकस्य निषेधे तादृशस्य प्रतियोगिनो नित्यवदन्वय:। अपारमार्थिकभेदनिषेधे च मदभ्युपगम्यमानपारमार्थिकभेदेन निषेधानन्वयादेव भेदसिद्धि:। अभावज्ञाने प्रतियोगिप्रमा नापेक्षिता किन्तु

ज्ञानमात्रमिति चेत्?, तर्हि अभेद इत्यप्रमितभेदविरह इत्येवार्थः पर्यवसन्नः। तथा च किं नश्छिन्नम्।

नन्वभेद इति भेदं न निषेधामः। किं नाम? धर्मान्तरमेव ब्रूम इति चेत्? न, तद्यदि भेदविरोधि तदा विरोधनिरूपकतयैव भेदसिद्धिः। अथ भेदाविरोधि तदा घटपटयोरभेदनामकं धर्मान्तरं द्रव्यत्वपृथिवीत्वादिवद्यदि प्रतीतिपथमवतरेत् कस्तन्निषेधाय यतेत। प्रतीयत एव श्रुतेरिति चेत्? न, श्रुतीनां भेदविषयतयोपपादनात्।

किञ्च श्रुत्या यदद्वैतं प्रतिपाद्यते तत्किं घटादिनिष्ठमुत ब्रह्मनिष्ठमुतोभयनिष्ठस्वरूपम्। आद्ये भेदविरोधि न वा, उभयथापि भेदसिद्धेः, एकत्र भेदनिरूपकतयाऽन्यत्र श्रुतिप्रतिपन्नाद्वैतविरोधादेव। अथ ब्रह्मनिष्ठमेवाद्वैतं नाम धर्मान्तरं, तदपि न, भेदविरोधित्वतदविरोदित्वाभ्यां भेदसिद्धेः। अथ ब्रह्मप्रपञ्चोभयनिष्ठमद्वैतं धर्मः श्रुतिप्रतिपाद्यस्तथापि भेदविरोधे भेदसिद्धिः, तदविरोधे तत्सिद्धिः। यथा चोभयगतमद्वैतं त्वन्नये तथा सत्त्वमपि उभयगतमस्तु। अथ ब्रह्मस्वरूपमेवाद्वैतं श्रुतिप्रतिपाद्यं तदा न नो विवादः, श्रुत्या भेदस्याप्रतिक्षेपात्। अद्वैतमात्रं न प्रतिपाद्यते किन्तु द्वैतं निषिध्यते इति चेद्? द्वैतनिषेधो ब्रह्मभिन्नो न वा, आद्ये द्वैतसिद्धिः, अन्त्ये कथं द्वैतनिषेधः, श्रुत्या ब्रह्मण एव विधेः।

ननु स्वरूपं भेदस्तदा स्याद् यदि नानास्वरूपं स्यात्। नानात्वञ्चान्योन्याभावाधीनं त्वया वाच्यम्, अन्योन्याभावस्तु भेदः सर्वथाप्यनुपपन्नः। तथा हि अन्योन्याभावस्तादात्म्याभावः। तस्य च तादात्म्यं घटपटयोः प्रतियोगि वाच्यम्। तस्य च सिद्धौ सिद्धमद्वैतम्। तदसिद्धावत्यन्तासतो न विशेषणत्वं, नाप्युपलक्षणत्वं सम्भवतीति तद्विशिष्टस्तदुपलक्षितो वा अभावप्रत्ययो न स्यात्, अभावप्रतीतावुपलक्षणतया विशेषणतया वा प्रतियोगिता(वत्ता)यास्तवाभ्युपगमात्। न च वाच्यं घटे पटत्वं पटे घटत्वं निषिध्यते, तथा च स एवान्योन्याभावात्मा भेद इत्यभिधीयत इति, एवं सति कः संसर्गाभावादस्य भेदः, तथा चाभावचातुर्विध्यस्थापनधन्धनस्य त्वयैव स्फुटीकरणम्। न च घटः पटे पटश्च घटे घटत्वपटत्वाभ्यामवच्छिद्य प्रतिषिध्यत इति वाच्यम्, एवं सति घटत्वपटत्वयोरवच्छेदकधर्माभावात् तयोरन्योन्यस्मिन्निषेधानुपपत्तौ अन्योन्याभावात्मकभेदाभावादन्योन्यधर्मवत्त्वमन्योन्यस्मिन्निति घटपटयोरभेद एव पर्यवसन्न इति चेत्? मैवम्, अभिप्रायानवगमात्। न ह्यन्योन्यतादात्म्यं प्रतियोगि ब्रूमोऽन्योन्याभावे, येन प्रतियोग्यप्रसिद्धिनिबन्धनं तद्विशिष्टतदुपलक्षितप्रतीत्यनुदयप्रसङ्गः। न वा

घटत्वपटत्वयोरेव प्रतियोगित्वमाचक्ष्महे, येन संसर्गाभावाविशेषप्रसङ्गः, न वा घटपटयोरन्योन्यस्मिन्निषेधात्तादात्म्याभावं व्यवहरामो, येन घटत्वपटत्वयोः स्वगतावच्छेदकधर्मविरहनिबन्धनस्तयोरन्योन्याभावविरहः स्यात्, किं नाम? घटमेव प्रतियोगिनं ब्रूमः। स च यदि संसर्गावच्छिन्नो निषिध्यते तदा संसर्गाभावप्रतीतिः। तादात्म्यावच्छिन्नश्चेन्निषिध्यते तदाऽन्योन्याभावप्रतीतिरिति विशेषः स्यात्।

ननु तादात्म्यस्य प्रतियोगितावच्छेदकत्वेऽपि अप्रतीतत्वं तदवस्थमेवेति चेद्? [न,] घटस्य प्रतियोगिनो यदवच्छेदकं तादात्म्यं तस्य घट एव प्रमितत्वात्, न हि घटतादात्म्यात्मा न घटः। ननु घटनिष्ठतादात्म्यं चेत्पटे निषिध्यते तदा तादात्म्यप्रतियोगिकः संसर्गाभाव एवायमिति चेत्? न, तादात्म्यस्याप्रतियोगित्वात्। घटतादात्म्यं पटे नास्तीति प्रतीतौ तादात्म्यमेव प्रतियोगित्वेन परिस्फुरतीति चेत्? न, तत्र पट(घट)तादात्म्यसंसर्गस्यैव प्रतिषेध्यत्वात्। संसर्गाभावाङ्गीकाराद् यत्र घटः पटो न भवतीति नञन्वयो घटेन तत्र तादात्म्यावच्छिन्नो घट एव प्रतियोगीति संसर्गाभाववैलक्षण्यात्, प्रतीतिवैलक्षण्यादेव प्रत्येतव्यवैलक्षण्यसिद्धिः। न हि घटः पटो भवतीति घटः पटो नास्तीति प्रतीत्योर्वैलक्षण्यं त्वया मया वा नाङ्गीक्रियते।

किञ्च भूतलवृत्तेरपि घटस्य घटो भूतलं न भवतीति भूतलेऽभावः प्रतीयते। स च न संसर्गाभावः, भूतले घटसंसर्गस्य प्रत्यक्षसिद्धत्वात्। एवञ्च घटो घटे नास्तीति न तादात्म्याभावः, घटतादात्म्यस्य घटे त्वयाप्यङ्गीकारात्। तस्मादस्त्यनयोरभावयोर्भेदः। स च प्रतियोग्यभेदेऽपि प्रतियोगितावच्छेदकधर्मभेदप्रयुक्त एवेति युक्तमुत्पश्यामः।

ननु यदि प्रतियोग्यभेदेऽपि प्रतियोगितावच्छेदकधर्मभेदादभावभेदः स्यात्तदा नेह पृथिवी, नेह घटः इत्यत्रापि पृथिवीत्वावच्छिन्नप्रतियोगिकः घटत्वावच्छिन्नप्रतियोगिकश्चान्यो घटस्यैवाभावः स्यादिति चेत्? अस्त्येवात्राभावद्वयम्। परन्तूभयत्रापि संसर्गस्य प्रतियोगितावच्छेदकतया संसर्गाभावव्यपदेशः। नन्वत्र घटत्वपृथिवीत्वाभ्यामेव प्रतियोगिताऽवच्छिद्यते न तु संसर्गेणापि। एवं घटः पटो नेत्यत्र घटत्वमेव प्रतियोगितावच्छेदकं न तु तत्तादात्म्यम्। तथा च केयं प्रतारणा यत्प्रतियोगित्वेन प्रतियोगितावच्छेदकत्वेनाप्रतीयमानावेव तादात्म्यसंसर्गौ तादात्म्याभावसंसर्गाभावयोः सीमाविवादे नियन्ताराविति चेत्?

मैवं, नेह घट इत्यस्याः प्रतीतेः घटसंसर्गो भूतले नास्ति घटो नेह वर्तत इत्यादिना विवरणात्, घटः पटो नेत्यस्यास्तु घटात्मा न पटो घटस्वरूपं न पट

इत्यादिना विवरणात्। तथा च विवरणविव्रियमाणार्थयोरविशेषात्कथं न संसर्गाभावतादात्म्याभावयोः प्रतीतिः। असति चास्मिन् भेदे अग्निहोत्रं जुहुयात्स्वर्गकाम इति श्रुतिपक्षपातिना त्वया हेतुफलभावोऽपि कथमुपपादनीयः, तस्य भेदगर्भत्वात्। अन्यथा समासादितदण्डो घटाय न प्रवर्तेत, दण्डात्मनो घटस्यापि तेनासादितत्वात्। दण्डस्य सत्त्वेऽपि घटासत्त्वञ्चेत्तदा तदानीन्तनविरुद्धधर्माध्यासादेव भेदसिद्धिः, सिद्धस्य करणत्वादसिद्धस्य कार्यत्वात्। असति भेदे घटमानयेत्युक्ते पटमप्यानयेत्, घटार्थं प्रवृत्तस्तन्तूनप्युपाददीत तन्तुवद् वा मृदमपि नोपाददीत। वाजपेय[जन्य]स्वर्गार्थं कलञ्जमपि भक्षयेत्, वाजपेयकलञ्जभक्षणयोरभेदाद् वाजपेयजन्यस्वर्गकलञ्जभक्षणजन्यनरकयोरप्यभेदात्। गां दद्यादिति विधेः रासभमपि दद्यात्, गोरासभयोरभेदात्। सुरां न पिबेदिति निषेधात् क्षीरमपि न पिबेत्—इत्यादिश्रौतस्मार्तलौकिकबहुवित्तव्ययायाससाध्य-सकलव्यवहारविप्लवः स्यात्। आगमे चेत्तव श्रद्धा कर्मपरतत्तदागमप्रतिपाद्य-स्वर्गापूर्वादिपारमार्थिकत्वे कः प्रद्वेषः। को वोपनिषत्प्रतिपाद्यत्वाभिमत-ब्रह्माद्वैतेऽनुरागः। कर्मपरश्रुतिभिः भेदो न प्रतिपाद्यते येनाभेदप्रतिपादकश्रुत्या तासां पारिपान्थ्यं स्यादिति चेत्? स्वर्गापूर्वादयश्चेत्प्रतिपाद्यत्वेन पारमार्थिका-स्तावतैवाद्वैतपारिपान्थ्यम्। अथ स्वर्गादयोऽप्यपारमार्थिका एव तदा ब्रह्माद्वैतपारमार्थिकत्वे कस्ते प्रतिभूः। अथ स्वर्गादयः श्रुतिप्रतिपाद्य-त्वात्पारमार्थिकाः। भेदस्त्वमीषां श्रुत्यप्रतिपाद्यत्वादपारमार्थिक इति चेत्? स्वर्गादयः सन्तु नाम पारमार्थिकाः, श्रुतिप्रतिपाद्यत्वात्, हेतुफलभावोऽप्यमीषामस्तु पारमार्थिकः इत्येतावदेवास्माकमपेक्षितमापाततः। क्रमेण तु चेद्धेतुफलभाववादिभिः स्वरूपपारमार्थिकत्वरक्षायै भेदोऽप्यपेक्षिष्यते तदा रुदन्तमपि त्वामनादृत्य भेदः सेत्स्यति। वस्तुतस्तु भेदस्यैव प्रतिपाद्यत्वं, न तु त्वदभिमताभेदस्यापीति दर्शितं प्राक्।

ननु क एवमाह भेदो नास्तीति किन्तु सकललौकिकव्यवहारधुरीणो व्यावहारिकभेदोऽस्त्येव, न हि मिथ्यासत्यभेदोऽपि नास्माभिरङ्गीक्रियत इति चेत्? उच्यते, किमिदं व्यावहारिकत्वं नाम यस्य ब्रह्मणि विरहो भेदे च सत्त्वम्। ज्ञानरूपव्यवहारविषयत्वमिति चेत्? न, इष्टत्वात्, ब्रह्मण्यप्येतस्य विद्यमानत्वाच्च। ब्रह्मणि ज्ञानविषयत्वं नास्तीति वाक्येन यदि ज्ञानं जननीयं तदा ज्ञानविषयत्वमवर्जनीयं, न चेत्तदा सुतरां ज्ञानविषयत्वमवर्जनीयम्। अथ व्यवहारोऽभिलापस्तद्विषयत्वं व्यवहारिकत्वमिति चेत्? न, ज्ञानविषययत्व-

पक्षोक्तदोषापातात्। नयनानयनादिरूपव्यवहारविषयत्वमेव तत्त्वमिति चेत्? न, अन्योन्याभावरूपे भेदे तदभावात्।

ननु ज्ञानेच्छाप्रयत्नादिविषयत्वं यद्यपि व्यावहारिकत्वं प्रकृते नोपपाद्यते तथापि बाध्यत्वमेव व्यावहारिकत्वं पारिभाषिकमिह विवक्षितमिति चेत्? बाधो विपरीतप्रमा, तद्विषयत्वमेव बाध्यत्वमिति यदि तदा त्वयैव प्रामाणिकत्वमुपपादितम्। अथ भ्रमविषयत्वं बाध्यत्वं तदा भेदः पारमार्थिक इति ज्ञाने त्वया भ्रमत्वेनाङ्गीक्रियमाणे पारमार्थिकत्वांशे बाधेऽपि धर्म्यंशेऽबाधनात्, भेदस्याबाध्यत्वमित्यायातम्। **'धर्मिणि सर्वमभ्रान्तं प्रकारे तु विपर्यय'** इत्यभ्युपगमात्। तथा च भेदत्वेन भेदो न बाध्य इति सिद्धम्। अन्यथा ब्रह्मापारमार्थिकमित्यपारमार्थिकत्वबाधे ब्रह्मणोऽपि बाध्यत्वं स्यात्। अथ घटो भिन्न इति ज्ञानं भ्रान्तं तत्र च प्रकारो भेद एव, अतस्तस्य बाध्यत्वमिति चेत्? न, घटपटौ भिन्नाविति ज्ञाने प्रात्यक्षिकश्रौतौपपत्तिकबाधानां निरासात् निरसिष्यमाणत्वाच्च, क्वचित्काले क्वचिद्विषये भेदस्य बाध्यत्वेऽपि सर्वत्राबाधात्। न हि सार्वत्रिको बाधस्त्वया शक्योपदर्शनः। अबाध्यत्वेनाशक्यव्यवस्थापनत्वमेव व्यावहारिकत्वमिति चेत्? न, तस्य ब्रह्मण्यपि समानत्वात्। तत्र श्रुतिप्रतिपाद्यत्वादेवाबाध्यत्वव्यवस्थितिरिति चेत्? न, भेदस्यापि श्रुतिप्रतिपाद्यत्वोपपादनात्। भेदग्रहे केषामपि कदापि कुत्रापि बाधो नास्तीति कथं त्वया ज्ञायते, येन भेदस्याबाध्यत्वं मन्यस इति चेत्? त्वद्व्यवस्थाप्यमानबाध्यत्वव्यवस्थाविरहादेवाबाध्यत्वसिद्धेः। अस्यां कथायां त्वमेव व्यावहारिकोपपादकतायामारूढोऽसि। यत्र तु बाधविरहोऽस्माभिर्व्यवस्थापनीयस्तत्र येन प्रकारेण ब्रह्मसाक्षात्कारस्य बाधविरहस्त्वयोपपाद्यः स एव चेदस्माभिरुपपादयितुं शक्य एतावतैवास्मान् जयित्वे व्यवहरिष्यसि।

ननु ब्रह्मभिन्नत्वमेव व्यावहारिकत्वमिति चेत्? न, एतादृशव्यावहारिकत्वस्यास्मदपेक्षितत्वाद् भेदभिन्नत्वेन ब्रह्मणोऽपि व्यावहारिकत्वस्य सुवचत्वाद् ब्रह्मभिन्नत्वस्य त्वयाऽभ्युपगम्यमानस्य पारमार्थिकत्वे भेदपारमार्थिकत्वस्य सिद्धत्वाच्च। असत्यत्वं व्यावहारिकत्वमिति चेत्? असत्यत्वमिति बाध्यत्वं चेत्? तदा उक्तोत्तरम्। अप्रामाणिकत्वञ्च प्रमाणगोचरत्वोपपादनेनैव निरस्तम्। अलीकत्वञ्च विधिनिषेधव्यवहारगोचरत्वोपपादनेनैवापास्तम्। असत्त्वं व्यावहारिकत्वमिति चेत्? तत्र सत्त्वं यदि सत्तायोगित्वं तदाऽन(नु)मन्यामहे, अन्योन्याभावस्य सत्तायोगित्वानभ्युपगमात्। अभावत्वमेवासत्त्वमिति चेत्? न, इष्टत्वात्। भावप्रतियोगित्वमिति चेत्? न, इष्टत्वादेव। मिथ्यात्वमेव व्यावहारिकत्वमिति

चेत्? मिथ्यात्वमित्यप्रामाणिकत्वं यदि तत्रोक्तम्। मिथ्यापदाभिधेयत्वञ्चेत्? तत् स्वसङ्केतेनेश्वरसङ्केतेन वा? नाद्यः, तस्य ब्रह्मण्यपि सुवचत्वात्। न द्वितीयः, तत्सङ्केतग्राहककोषव्याकरणादौ भेदपदपर्यायत्वेन मिथ्यालीकादिपदाना-मननुशासनात्। अमोक्षात्मकत्वमेव व्यावहारिकत्वमिति चेत्? न, इष्टत्वात्, आत्यन्तिकदु:खाभावस्य मोक्षतयाऽन्योन्याभावभिन्नत्वात्। मोक्षोपायज्ञानाविषयत्वं व्यावहारिकत्वमिति चेत्? न, श्रवणमनननिदिध्यासनादीनां मोक्षोपायज्ञानानां शरीरात्मभेदविषयत्वात्। भेदज्ञानार्थमेव हि श्रवणदीनामुपयोगः। सप्रतियोगित्वमेव व्यावहारिकत्वमिति चेत्? न, इष्टत्वात्। अद्वैतविरोधित्वमेव व्यावहारिकत्वमिति चेत्? न, इष्टत्वात्, विपरीतस्यापि सुवचत्वात्। प्रपञ्चान्तर्गतत्वं चेद् व्यावहारिकत्वं तदा प्रपञ्चबहिर्गतत्वेन ब्रह्मण एव किं न व्यावहारिकत्वं स्यात् प्रपञ्चत्वस्यापि विकल्प्य कदर्थनीयत्वाच्च। अविद्यादशावेद्यत्वञ्चेद् व्यावहारिकत्वं तदा न किञ्चिदनिष्टं वैपरीत्यञ्च सुवचम्। अविद्याविषयत्वं व्यावहारिकत्वमिति चेत्? न, क्वचित् तथात्वे पारमार्थिकत्वाक्षतेः। जडत्वं व्यावहारिकत्वमिति चेत्? न, तद्यदि ज्ञानभिन्नत्वं तदनुजानीमः। अथात्मभिन्नत्वं? तथाप्यनुजानीमः। अथातद्भिन्नत्वं?, तथापि नानिष्टम्। मुक्तेनावेद्यत्वमेव व्यावहारिकत्वमिति चेत्? न, इष्टत्वात्।

भेदस्य पारमार्थिकत्वे मुक्तिदशायां कथं न वेद्यत्वमिति चेत्? न, वेदनविरहादेव। ब्रह्मणस्तदा कथं वेदनमिति चेत्? इयमपि तव भ्रान्तिः। तस्मात् व्यावहारिको भेद इति तवाङ्गीकारो न किञ्चिदनिष्टमापादयति। केवलं पारमार्थिकत्वं व्यावहारिकत्वमिति ब्रह्मप्रपञ्चयोर्धर्मद्वयं प्राचीनैर्वृद्धवेदान्तिभिः शरमुष्टिन्यायेन बोधितम्। अर्वाचीना अपि वेदान्तिनो व्यामुढा एव वर्तन्ते। वस्तुतः प्रमाणसिद्धतया ब्रह्मप्रपञ्चयोर्विशेषो नास्त्येव।

व्यावहारिकत्वादेव प्रपञ्चस्य पारमार्थिकत्वम्। तथा हि भेदः पारमार्थिकः व्यावहारिकत्वात्, यन्न पारमार्थिकं तन्न व्यावहारिकं यथा ब्रह्माद्वैतं, न चायं न व्यावहारिकः, तस्मात् पारमार्थिक इति व्यतिरेकी। यद्वा पारमार्थिकत्वा-पारमार्थिकत्वाभ्यां विवादपदं भेदः पारमार्थिकः, व्यावहारिकत्वात्, यद्यद्व्यावहारिकं तत्तत्पारमार्थिकं, यथा ब्रह्म, पारमार्थिकत्वव्याप्यव्यावहारिकत्ववाँश्चायं तस्मात् पारमार्थिकः। साधनविकलो दृष्टान्त इति चेत्? न, ब्रह्मणोऽपि व्यावहारिकत्वस्य प्रमाणसिद्धत्वात्। व्यावहारिकत्वं हि व्यवहारगोचरत्वं, तच्च ब्रह्मण्यस्ति ब्रह्मेत्यभिलापरूपव्यवहारसत्त्वात् ज्ञानरूपव्यवहारसत्त्वाच्च, त्वन्मते घटाद्यात्मनो

ब्रह्मणो नयनानयनादिरूपव्यवहारसत्त्वाच्च। ब्रह्मणि न व्यावहारिकत्वमित्ययत्नतो निषेधरूपव्यवहारस्यापि त्वयाभ्युपगमात्। व्यावहारिकत्वानिषेधे व्यावहारिकत्वम-यत्नसिद्धमेव। तस्माद् यथा यथा व्यावहारिकत्वनिषेधो ब्रह्मणि तथा तथा व्यावहारिकत्वमवारणीयमेव। अव्यावहारिकं कथं व्यावहारिकं स्यादिति चेत्? आत्मानमुपालभस्व येन स्फुटतरं व्यवहारं ब्रह्मणि पश्यन्नपि अव्यावहारिकत्व-मभ्युपैषि।

एकमेवाद्वितीयं ब्रह्मेति श्रुतिरपि अद्वितीयत्वादिना रूपेण ब्रह्म व्यवहरणीयमित्येतत्परैव। तथा च न दृष्टान्तस्य साधनवैकल्यं प्रथमानुमाने। तर्हि गतं, व्यतिरेकव्याप्त्यभावादिति चेत्? न, त्वन्मतेन तत्र व्यतिरेकसत्त्वात्[१]।

यद्वा भेदः पारमार्थिकः, वेद्यत्वात्, यदेवं तदेवं, यथा ब्रह्म, तथा चायं, तस्मात्तथा। वेद्यत्वञ्च वेदनविषयत्वम्। तच्च त्वन्मते ब्रह्मण्यप्यस्त्येव।

भेदः प्रमाविषयः, ज्ञानविषयत्वात्, यदेवं तदेवं यथा ब्रह्म, तथा चायं, तस्मात्तथा। शुक्तिनिष्ठत्वेन ज्ञाते रजतत्वे व्यभिचार इति चेत्? न, रजतत्वस्य प्रमाविषयत्वात्। रजतत्ववैशिष्ट्यं शुक्तौ भासते, तच्च न पारमार्थिकमिति चेत्? न, रजतत्ववैशिष्ट्यस्य रजते पारमार्थिकत्वात्। न हि तदतिरिक्तं वैशिष्ट्यं भासते शुक्तौ। तर्हि शुक्तौ रजतज्ञानं कथं भ्रम इति चेत्? न, व्यधिकरणप्रकारावच्छिन्नविषयप्रतियोगितया, विशेष्यावृत्तिप्रकारकतया, विशेष्य-निष्ठात्यन्ताभावप्रतियोगिकधर्मप्रकारतया तत्प्रतियोगिज्ञानतया वा। न च सद्विषयतया वणिग्वीथ्याद्यनुभूतरजतत्वस्य स्मरणे सति शुक्ताविन्द्रियसन्निकृष्टायां शुक्तिरजतयोर्भेदग्रहाभावे सामग्रीवशात्तादृशारोपसम्भवात्। तथा च नैयायिकानां ज्ञेयत्वप्रमेयत्वयोरविनाभाव एवेति न व्यभिचारः।

ननु रजततादात्म्यं शुक्तौ नास्ति तथा च कथं सदेव वैशिष्ट्यं शुक्तौ भासत इत्यङ्गीकरिष्यसीति चेत्? तत् किं रजततादात्म्यस्य क्वचिदभावोऽस्तीत्येव तस्यापारमार्थिकत्वं, तदा तादृशमपारमार्थिकत्वं घटपटादीनां सर्वेषामप्यङ्गीकुर्म इति दुर्मते तवालं मर्मपीडया। को हि घटादीनां नाभावाप्रतियोगित्वमङ्गीकरोति।

एतेन स्वप्नदृष्टकामिन्यादीनामपि तरङ्गप्रसङ्गानुभूतचन्द्रभेदादीना-मपारमार्थिकत्वमभ्युपगच्छतामस्माकं तद्दृष्टान्तावष्टम्भेन जागरावस्थानुभूयमानानां घटपटतद्भेदानामपारमार्थिकत्वानुमानं न किञ्चिदनिष्टमापादयतीत्यवधातव्यम्।

१. अन्वयदृष्टान्तः स्वमतेन, व्यतिरेकदृष्टान्तः परमतेनेति भावः।

सदुपरक्तमसदपि भ्रमे भासत इति पक्षोऽस्माभिर्नाङ्गीक्रियत एव येन तदादाय दृष्टान्तावकाशस्तव स्यादिति।

घटः पटप्रतियोगिकान्योन्याभावात्यन्ताभावरहितः पटत्वप्रतियोगिकाभाववत्त्वात्, यत्र घटप्रतियोगिकान्योन्याभावात्यन्ताभावरहितः (तं) न तत्प(प)टत्वप्रतियोगिकात्यन्ताभाववत्, यथा पटः, न च नायं पटत्वप्रतियोगिकात्यन्ताभाववान्, तस्मात्, पट(घट)प्रतियोगिकान्योन्याभावात्यन्ताभावरहितः, घटः पटनिष्ठान्योन्याभावप्रतियोगी पटत्वप्रतियोगिकात्यन्ताभाववत्वात्—यदेवं तदेवं यथालोष्ठं यथा चायं तस्मात्तथेति प्रसाध्यं तद्दृष्टान्तबलेनान्वयी वा घटपटावन्योन्यभेदवन्तौ अन्योन्यधर्मात्यन्ताभाववत्त्वात्, यौ अन्योन्यधर्मात्यन्ताभाववन्तौ तावन्योन्यभेदवन्तौ, यथा विद्याविद्ये, अन्योन्यधर्मात्यन्ताभाववन्तौ चेमौ, तस्मादन्योन्यभेदवन्तौ, घटत्वं पटतादात्म्यावच्छिन्नप्रतियोगिताकाभावसमानाधिकरणं, पटत्व[ा]समानाधिकरणधर्मत्वात्, यत्र पटतादात्म्यावच्छिन्नप्रतियोगिताकाभावसमानाधिकरणं नासौ पटत्वासमानाधिकरणधर्मः यथा पटत्वम्, न चैतन्न पटत्वसमानाधिकरणधर्मः, तस्मात् पटतादात्म्यावच्छिन्नप्रतियोगिताकाभावसमानाधिकरणमिति व्यतिरेकी।

घटवद्भूतलं घटप्रतियोगिकाभावाधिकरणं, घटत्वप्रतियोगिकाभावाधिकरणत्वात्, यद् घटत्वप्रतियोगिकाभावाधिकरणं तद्घटप्रतियोगिकाभावाधिकरणं, यथा पटः, घटत्वप्रतियोगिकाभावाधिकरणञ्चैतत्, तस्माद् घटप्रतियोगिकाभावाधिकरणम्। अत्र पक्षविशेषणमहिम्ना संसर्गाभावबाधेऽन्योन्याभावसिद्धिः।

एवं घटवत्कपालं पक्षीकृत्यैतदेव साध्यम्। एवं रूपं स्वसमानकालीनस्वप्रतियोगिकाभावसमानाधिकरणं, गुणत्वात्, संयोगवत्। रसादीनामपि पक्षसमत्वान्न व्यभिचारः।

एवं संयोगमेव दृष्टान्तीकृत्य वृत्तिमत्पदार्थपक्षकमनुमानं प्रयोक्तव्यम्। व्यभिचारस्तु पक्षसमोक्त्या निरसनीयः।

प्रपञ्च सत्यः, दृश्यत्वात्, यत्र सत्यं तन्न दृश्यं, यथा—ब्रह्माद्वैतं, न चायं न दृश्यः, तस्मात्सत्यः। शुक्तौ रजततादात्म्यं दृश्यमपि न सत्यमिति व्यभिचार इति चेत्? न, तस्यापि सत्यत्वात्। साधितञ्च तत्सत्यत्वम्।

प्रपञ्चः पारमार्थिकः, अभिधेयत्वात्, यद्यदभिधेयं तत्तत्पारमार्थिकम्, यथा ब्रह्म, पारमार्थिकत्वव्याप्याभिधेयत्ववाँश्चायं, तस्मात् पारमार्थिकः।

स्वप्नानुभूतप्रपञ्चोऽपि सत्य एवेत्यवधेयम्।

भेदादिज्ञानं सद्विषयकं, ज्ञानत्वात्, यद्यज्ज्ञानं तत्तत्सद्विषयकं यथा ब्रह्मज्ञानं, सविषयकत्वव्याप्यज्ञानत्ववच्च विवादविषयभेदादिज्ञानं, तस्मात्सद्विषयकम्।

ननु स्वशिरश्छेदक्षित्यादिगिलनाकाशपतनोर्वश्याद्यप्सरस्सम्भोगसमुद्रतरण-महेन्द्रादिविजयसुमेरुशिखरसमारोहणैरावतारोहणादिकमपि निद्राविद्रावितेन्द्रियगणः पुरुषः पश्यति तदपि त्वया पारमार्थिकमेष्टव्यम्। एवञ्चेन्नूनं तर्ककर्कशशेमुषीकोऽसि येन तदानीन्तनजागरानन्तरभाविबोधव्यतिरेके सत्यपि नान्यथा मन्यस इति चेत्? कः सन्देहः। परं तात्कालिकबाधेन स्वशिरश्चेदादीनां तज्जन्मनि परमभावमवधारयामः। न तु जन्मान्तरेऽपि त्वदुदाहृतं सर्वं नासीदित्यङ्गीकुर्मः। तात्कालिकबाधाद् वा पुरुषान्तरस्य वा नास्तीति निष्टङ्कयामः। अत एव पुराणादौ निद्राणस्तथाऽनुभवति। तस्माज्ज्ञेयत्वपारमार्थिकत्वयोः समनियमवादिनो नैयायिकाः स्वप्नविषयान् व्यभिचारस्थलत्वेनोदाह्रियमाणानपि त्वया गजनिमीलिकयाऽवधीरयता न मनागपि बिभ्यतीति।

ननु यथा ब्रह्म तथा प्रपञ्चो रासभादिः। तथा चैवं मन्यमानस्य तव नास्तिकेभ्यो न विशेषमवधारयाम इति चेत्? यो रासभाभिन्नं ब्रह्म मन्यते यश्च सत्त्वाभिधेयत्वप्रमेयत्वादिना रासभतुल्यं ब्रह्म स्वीकरोति; तयोः कतरो नास्तिक इति त्वमेव परिभावय। प्रपञ्चाद्भिन्नत्वेन ब्रह्म जानीहीत्येतदर्थमेव ममायमायासः। तर्हि प्रपञ्चाद् ब्रह्म कथमभ्यर्हितं येनोपनिषदां ब्रह्म ब्रह्मेति घोषणेति चेत्? ब्रह्मसाक्षात्कारः साक्षादेव दुःखोच्छित्तिरूपपरमपुरुषार्थोपयोगी न तु प्रपञ्चसाक्षात्कार इति बोधयितुम्। न तु ब्रह्मैव साक्षात्प्रपञ्च इति ख्यापयितुमित्यलमभिनिवेशेन।

ननु यदि श्रुतेस्तथैव तात्पर्यं तदा व्यासः कथमेवं नाज्ञासीद्यत्तथैवा-सूत्रयदिति चेत्? यदि ब्रह्म पारमार्थिकं तर्हि कथं बृहस्पतिर्नाज्ञासीद्येन सर्वशून्यतामसूत्रयत्। न हि व्यासात्सुरगुरुरप्राज्ञः। पाखण्डव्यामोहार्थमिति चेत्? तत्किं व्याससूत्राणां तत्फलमसम्भावितं, तर्हि तत्र तैर्थिकानां कथं परिग्रह इति चेत्? ब्रह्मस्तुतित्वेन। न हि ब्रह्मस्तुतावपि मम विद्वेषः। प्रपञ्चमिथ्यात्वसाधनं परं न सहामहे।

पूर्वानुमानादि अद्वैतप्रतिपादकागमबाधात् कथं द्वैतप्रमां जनयिष्यतीति चेत्? आगमबाधो हि आगमवाक्यजन्या साध्यविपरीतप्रतीतिः। सा च सत्या न वा? आद्ये कथं बाधः—तयैव सत्यया द्वैतसिद्धावद्वैतप्रमाऽभावात्। न हि

साध्यविपरीतप्रतीतिमात्रं बाधः, किन्तर्हि? साध्याभावप्रमा, सा चेदस्ति द्वितीया, कथं द्वैताभावप्रमारूपो बाधः। अथागमजनिताप्यद्वैतबुद्धिर्न सत्या, तर्हि सुतरां न बाधः, असत्येन ज्ञानेन बाधायोगात्। अथ मन्मते श्रुतिजबुद्धिरसत्या तव तु सत्यत्वादेव बाधात्मिकेति चेत्? न, मम मते सत्याद्वैतबुद्धिर्नास्त्येव। तर्हि एकमेवाद्वितीयं ब्रह्मेति वाक्यं ज्ञानं न जनयत्येव? क एवमाह न जनयति, अपि तु ब्रह्मणि ब्रह्मप्रतियोगिको भेदो नास्त्येतादृशं ज्ञानं जनयति, एतच्च घटपटादिभेदसाधने बाधकं न भवति, भिन्नविषयत्वात्। सर्वाद्वैतज्ञानं यन्ममोत्पन्नं श्रुतेः यच्च तव ब्रह्मणि ब्रह्माभेदविषयकज्ञानमुत्पन्नमनयोः कतरत्प्रमेति सन्देहोऽस्तीति चेत्? तर्हि सुतरां न बाधः, सन्दिग्धप्रमाणमपि ज्ञानं बाधकं परन्तु सन्देह एव नास्ति।

मदभ्युपगम्यमानतादृशश्रौतज्ञानस्य त्वयापि प्रामाण्याङ्गीकारात् त्वत्प्रतीतिस्तु यदि प्रमा तदा नाद्वैतप्रमा, अथाप्रमा तथापि न द्वैतप्रमा इति कूटफक्किकयैव बाधव्युदासः।

नन्वस्तु साध्याविशेषः हेतुसाध्ययोर्भेदाभावात् तत्र यदि साध्यं सिद्धं तदा सिद्धसाधनमेवार्थ(व, अथा)सिद्धं तदा तदात्मनो हेतोरप्यसिद्धतया स्वरूपासिद्धिरिति चेत्?, मैवं, व्यावहारिकभेदेन त्वयाभ्युपगम्यमानेन भिन्नेन हेतुना सकलाभासव्युदस्तेन सिद्ध्यन् भेदः पारमार्थिको भूत्वा सेत्स्यतीत्यदोषात्।

ननु हेतूनामसत्त्वादेव स्वरूपासिद्धिरस्तु, न हि हेतूनपि सतो वयमङ्गीकुर्म इति चेत्? तर्हि असिद्धिरप्यसती कथम् अनुमानमपहस्तयिष्यति। सती चाऽसिद्धिस्त्वया मम पीडयाऽपि नाङ्गीकर्तव्या, असत्याप्यसिद्ध्या असाधकत्वं वास्तवं सेत्स्यतीति न दोषः। मया च यादृशी असिद्धिः दोषत्वेन मन्यते सा च नास्त्येव प्रकृते येन मद्दिशापि दोषाय साऽवकाशमासादयेत्। एतेनाश्रयासिद्धिः परिहृता।

नन्वस्तु व्याप्यत्वासिद्धिः, हेतुसाध्ययोर्भेदे सति व्याप्तिः स्यात्। भेदः व्याप्यस्यैव साधनीय इति दुर्घटत्वमिति चेत्? मैवम्, आपाततस्त्वदभ्युपगम्यमान-व्यावहारिकभेदमादायैव व्याप्तिसिद्धेः। वस्तुगत्या भेदज्ञानं व्याप्तिजनकं व्याप्तिज्ञानजनकं वा? नाद्यः, व्याप्तेर्भेदज्ञानजन्यत्वानभ्युपगमात्। न द्वितीयः साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्कत्वज्ञानस्य भेदज्ञानानुपजीवकत्वात्। अभ्युपेत्य ब्रूमो यो यो धूमवान् स वह्निमानित्याकारेण गृह्यमाणायां

व्याप्तावभेदज्ञानस्यैवोपगमात्। अत एव साधनसमानाधिकरणान्योन्याभावाप्रतियोगिसाध्यवत्कत्वमित्येवाभेदगर्भां व्याप्तिं वर्णयन्ति।

नन्वस्तु सिद्धसाधनं व्यावहारिकस्य भेदस्य सिद्धत्वादिति चेत्? न, भेदं पक्षीकृत्य वेद्यत्वेन पारमार्थिकत्वसाधनात्।

ननु वेद्यत्वं न पारमार्थिकत्वव्याप्यं तस्य पारमार्थिकत्वाभावव्याप्यत्वाद् इति चेत्? मैवं, वेद्यत्वस्य ब्रह्मणि पारमार्थिकेऽपि गत्वात्। तत्र वेद्यत्वं नास्ति, किन्तु स्वयमेव तद् वेदनात्मकमिति चेत्? ब्रह्मणि वेद्यत्वं नास्तीत्यत्र ब्रह्मपदेन ब्रह्मोपस्थाप्यते न वा? आद्ये वाक्येनैव वेद्यत्वम्। अन्त्ये ब्रह्मणि वेद्यत्वनिषेधस्त्वया कर्तुं न शक्यः वेद्यत्वनिषेधकेन वाक्येन ब्रह्मणोऽनुपस्थापनात्। ब्रह्म वेदनत्वान्न वेद्यमित्यनुमानपक्षेऽपि पक्षोपस्थितौ वेद्यत्वमवर्जनीयम्। पक्षानुपस्थितौ वेद्यत्वमवर्जनीयं, निषेधाभावात्।

नन्वस्तु सत्प्रतिपक्षः, तथा हि प्रपञ्चो मिथ्या, वेद्यत्वात्, शुक्तिरजततादात्म्यवत्। भेदो न पारमार्थिकः, व्यावहारिकत्वात्, तरङ्गप्रसङ्गानुभूतचन्द्रभेदवत्। पटादयो न पारमार्थिकाः, जडत्वात्, शशशृङ्गवदिति चेत्? मैवं; प्रथमानुमानस्य ब्रह्मणि व्यभिचारित्वात्, दृष्टान्तस्य[च] साध्यविकलत्वात्। साध्यञ्च मिथ्यात्वं यदि अपारमार्थिकत्वं तदा साध्याप्रसिद्धिः। अथ व्यावहारिकत्वमेव, तदा सिद्धसाधनम्। अथ ब्रह्मभिन्नत्वं तथापि सिद्धसाधनम्। अथ सकलविधिनिषेधव्यवहाराभाजनत्वं तदा व्याघातः प्रपञ्चो मिथ्येति व्यवहाराभाजनत्वाङ्गीकारात्। अथ मिथ्यात्वं भ्रमविषयत्वं तथापि सिद्धसाधनं कदाचित् कस्यचिद् भ्रमविषयत्वाङ्गीकारात्। न हि भ्रमविषयत्वं प्रमाविषयत्वविरोधि, एकत्रैव रजतत्वे उभयदर्शनात्। अथ प्रमाभूतज्ञानाविषयत्वमेव मिथ्यात्वं तर्हि साध्याप्रसिद्धिः। अथ सदसद्भ्यामनिर्वचनीयत्वमेव मिथ्यात्वं तर्हि नायं वस्तुदोषः अपि तु तव निर्वचनाशक्तिरिति। यदि निर्वचनं समीहसे तदास्मदाराधनाय यतस्व। त्वयाऽपि निर्वक्तुं न शक्यत इति चेत्? तवोन्मत्तस्य पुरस्तादेवमेव। अथ सत्त्वासत्त्वसदसत्त्वपक्षेषु दूषणदर्शनादनिर्वचनीयत्वमेव प्रपञ्चस्यावधारयाम इति चेत्? अनिर्वचनीयत्वेऽपि दोषं पश्यसि न वा? आद्ये तदपि कथमवधारितवानसि। न चेत्? तदाऽनिर्वचनीयत्वेनैव वास्तवेन धर्मेण व्यवस्थितः प्रपञ्चो ब्रह्मभिन्नतया व्यवस्थाप्यत इत्यद्वैतपक्षाय त्वयैव दत्तो जलाञ्जलिः। अथानिर्वचनीयत्वमप्यपारमार्थिकमेव तदा मदभिमतं निर्वचनीयत्वमेव त्वया प्रपञ्चस्य सम्पादितमिति न विवादः। अथ न निर्वचनीयत्वं

नाप्यनिर्वचनीयत्वमित्युभयाभाववत्त्वमेव प्रपञ्चस्याङ्गीकुर्म इति चेत्? तर्हि उभयाभाववत्तयैव व्यवस्थित इति सिद्धो भेदः। अथ विरोधादेवमपि नाङ्गीकरोमि निर्वचनीयत्वानिर्वचनीयत्वयोः परस्परविरहव्याप्यतया परस्परविरहात्मता तत्रैकतरस्यावश्यकत्वादिति चेत्? तर्हि तेनैव प्रकारेण व्यवस्थितः प्रपञ्चः। अथ सर्व एव पक्षा दुष्टा इति न सत्त्वं नाप्यसत्त्वं न सदसत्त्वं न निर्वचनीयत्वं नानिर्वचनीयत्वं नोभयाभाववत्त्वं, नान्यतरवत्त्वम्। अत एव प्रपञ्चोक्तिरिति चेत्? तर्हि दुष्टत्वमेव पारमार्थिकम्। एतावतैव अदुष्टा ब्रह्मणो भेदसिद्धिः। दुष्टत्वमपि न पारमार्थिकमिति चेत्? अदुष्टत्वं तर्हि पारमार्थिकमित्यायातम्। अत एव प्रपञ्चस्य ब्रह्माभेदं मन्यामहे। अदुष्टत्वेनैकत्वादिति चेत्? न केवलमदुष्टत्वेनैक्यम्। किन्तर्हि? सत्त्वेनाभिधेयत्वेन प्रमेयत्वेन ज्ञेयत्वेन धर्मित्वेन धर्मत्वेन च रूपेण प्रपञ्चब्रह्मणोर्भेदो नास्तीति ममाभ्युपगमादिति मुण्डो भव। तर्हि भेदः कथमिति चेत्? अवान्तरधर्मवत्तयेति गृहाण।

अथ मिथ्यात्वं धर्ममेव किञ्चित् प्रमेयत्वादिवत् पारमार्थिकं साधयसि सत्प्रतिपक्षेण तर्हि मत्साध्यभेदाविरुद्धतया सत्प्रतिपक्षस्तावदयं न भवतीत्यलं कलहेन।

ननु विपक्षबाधकतर्कशून्यत्वात् सन्तु व्याप्यत्वासिद्धाः सर्वे हेतव इति चेत्? न, लौकिकवैदिकव्यवहारविप्लवरूपविपक्षबाधकतर्कस्य पूर्वमेव दर्शितत्वात्। भवतु वा व्यवहारविप्लवः किं नश्छिन्नमिति चेत्? एवमिष्टमनिष्ट-कोटौ निवेशयतस्तव पराजयादप्यबिभ्यतो निर्लज्जस्य स्वक्रियास्ववचनादि-व्याघातादयोऽपि दोषाः प्रतिभाशोषाय नालङ्कर्मीणा इति सचेतसामुपेक्षैवेत्यलमनेन।

नन्वस्तूपाधिरेव कश्चिदिहानुपलभ्यमानोऽपि शङ्क्यमानः, एतावताऽपि हेतवः सन्दिग्धव्याप्तिकाः न साध्यसाधनाय न पर्याप्ताः। तथा चोक्तम्—

**यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते।**
**विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम्।।**

इति चेत्? मैवं, तवोपाध्युपगमो यद्यसाधकत्वसाधनाय तदा तत्रापि शङ्क्यमानोपाधिरस्तु, तथा च स्वकार्याक्षमत्वेनोपाधिरुपन्यस्यमानोऽपि शतशस्त्वया न मां पर्याकुलयिष्यति। अथेदमसाधकं शङ्कितोपाधिग्रस्तत्वादित्ययं हेतुः शङ्क्यमानोपाधिरप्यसाधकत्वं साधयिष्यत्येवेति मतं तदा स्थापनानुमानमपि तथैव साध्यं साधयिष्यतीति न हि मां प्रत्येव दोषा दोषाः।

ननु सुहृद्भावेन पृच्छामि—शङ्कितोपाधिः कथं नानुमानमाकुलयति। क एवमाह नाकुलयतीति, यदि वाद्युपन्यस्तसाध्यव्यापकत्वेन निश्चितः साधनाव्यापकत्वेन सन्दिग्धः साधनव्यापकत्वेन वा निर्णीतः साधनव्यापकत्वेन सन्दिग्धः कश्चिद्धर्मः प्रतीतिपथमवतरति तदा सन्दिग्धोपाधिर्दोषो भवत्येव। तन्निरासाय चानुकूलस्तर्क एव पटीयान्। यत्र तु सहचारदर्शनव्यभिचारा-दर्शनाकूलतर्कैर्व्याप्तिः परिच्छिन्ना तत्रापि शङ्क्यमानोपाधेर्दोषत्वे धूमादिना वह्न्याद्यनुमितिरपि न स्यात्, तथा चेष्टसाधनतानुमितिरपि न स्यादिति निवृत्तिप्रत्ययानुदये निरीहं जगज्जायेतेति कण्टकोद्धारः।

किञ्चाद्वैते श्रुतिः प्रमाणं प्रमाणान्तरमपि वास्ति। यदि श्रुतिः प्रमाणं तदा तस्याः पारमार्थिकत्वमभ्युपेयम्। न ह्यपारमार्थिकात्पारमार्थिकं ज्ञानमुत्पत्तुमर्हति। अपारमार्थिकात्स्वप्नानुभूतकामिनीसंसर्गात् चरमधातुविसर्गः पारमार्थिकोऽस्तीति चेत्? स्वप्नानुभूतकामिनीतत्संसर्गयोस्तदा बाधेऽपि पारमार्थिकस्योपपादितत्वात्। असन्निकृष्टकामिनीतत्संसर्गो वा तदानीं कथं चरमधातुविसर्गञ्जनयिष्यतीत्यवशिष्यते तत्र कामिनीतत्संसर्गयोरभावेऽपि तज्ज्ञानाददृष्टसंस्कारादिसहकृतादुत्पद्यमानश्चरम-धातुविसर्गः पारमार्थिकहेतुक एवेति। कामिन्यसत्त्वात्तद्विषयकं ज्ञानमपि कथं सदिति चेत्? तद्विषयकज्ञानसत्त्वात् कामिन्या एव कथमसत्त्वमिति तुल्यम्। कामिन्यास्तत्र स्फुट एव बाध इति चेत्? बाधाच्चेदसत्त्वं तदा स्वप्नकामिनी नोपलब्धेत्यपि तव विपरीतज्ञानमुत्पद्येत येनानुभवस्याप्यसत्त्वमवधारितवानसि। यद्यप्यापाततः कामिनीज्ञानस्य[न] बाधस्तथापि विशेषणस्य कामिन्या बाधे तद्विशिष्टानुभवोऽपि बाधित एवेति चेत्? एवं सति भाविपुत्रज्ञानमपि तत्काले पुत्रासत्त्वेनासत् स्यात्। तत्र भावित्वेनैव पुत्र उपलभ्यते। तच्च तथैवेति कथं तदसत् स्यात्। असन्निकृष्टां कामिनीं सन्निकृष्टत्वेन गृह्णन्ननुभवः कथं सन्नित्यङ्गीकर्तुं शक्येतेति चेत्? एतावतैवापराधेनायं भ्रान्त इत्युच्यते यत्किलातद्देशामतत्कालामपि कामिनीं परमार्थसतीं तद्देशत्वेन तत्कालत्वेन गृह्णाति न त्वलीकविषयतया। तथा चासत्या श्रुत्या परमार्थसत् ज्ञानं न जननीयमित्यप्रमाणं श्रुतिरद्वैते। यच्च ज्ञानं श्रुत्या जननीयं तत्सदसद्वा? आद्ये द्वैतमेव। द्वितीये चासत्त्वेन घटादिभेदज्ञानेन समं श्रुतिजज्ञानस्याविशेषाद् द्वैतमपारमार्थिकम् अद्वैतञ्च पारमार्थिकमिति किङ्कृत एव भेदः।

इतस्तु दूषणोपक्रमा कथा। प्रपञ्चस्यापारमार्थिकत्वं यत्त्वयाभ्युपगम्यते तत्र पारमार्थिकत्वापारमार्थिकत्वयोर्द्धर्मयोर्भेदमभ्युपैषि न वा? आद्ये भेदः सिद्ध एव।

अन्त्ये पारमार्थिकत्वापारमार्थिकत्वयोरन्यतरद्ब्रह्मप्रपञ्चयोरन्यतरस्मिन् विधीयमानं कथं नोभयोरुभयधर्मवत्त्वमापादयिष्यति। तथा च प्रपञ्चः पारमार्थिको ब्रह्म चापारमार्थिकम् इत्यनिष्टमुभयत्रापद्येत। पारमार्थिकत्वापारमार्थिकत्वयोरपि व्यावहारिको भेदोऽस्तीति चेत्? अत एव यदा पारमार्थिकाभेदप्रसङ्गनिबन्धनो दोषस्तदा प्रपञ्चस्यापारमार्थिकत्वं यत्तदेवापारमार्थिकत्वं तस्य ब्रह्मणो वा यत्पारमार्थिकत्वं तदेव प्रपञ्चस्यापारमार्थिकत्वमिति वृथा तत्साधनायायासो वेदान्तिनाम्।

किञ्च भेदाभेदयोर्भेदोऽस्ति न वा? आद्ये सिद्धो भेदः। द्वितीये तव दर्शने यद् भेदखण्डनं तदभेदसाधनं[1] यच्चाभेदसाधनं तद्भेदसाधनमिति मदानुकूल्यं त्वयैव सम्पादितम्। ननु द्वैतमपारमार्थिकमद्वैतं पारमार्थिकमित्यमेव द्वैताद्वैतयोर्भेद इति चेद्? द्वैताद्वैतयोः पारमार्थिकतापारमर्थिकत्वे धर्मौ यदि परमार्थसन्तौ मन्यसे तदा सिद्ध एव भेदः। प्रतियोग्यनुयोगिवृत्तिधर्मयोः त्वयैव पारमार्थिकत्वप्रतिपादनात्।

किञ्च विद्याऽविद्ययोयोर्भेदोऽस्ति न वा? आद्ये सिद्धो भेदः। द्वितीये तयोर्न्निवर्त्यनिवर्तकभावानुपपत्तिः। विद्ययाऽविद्यानिवृत्तावपवर्ग इति हि तव मतं, तच्चाभेदेऽनुपपन्नम्। व्यावहारिकस्तु भेदो निरस्त एव।

अपि च क्षेत्रज्ञपरमात्मनोर्भेदोऽस्ति न वा? आद्ये सिद्ध एव भेदः। अन्त्ये चिदानन्दमयस्य परमात्मनो दुःखमयत्वात् सर्वज्ञत्वशरीरित्वादिविरोधः। उपाधिभेदादेवं स्यादिति चेत्? उपाधिभेदस्य पारमार्थिकस्य त्वयानभ्युपगमात्। अभ्युपगमे वा किमपराद्धमुपधेयभेदेन। उपधेयभेदो हि पारमार्थिको नास्ति, किन्तु व्यावहारिक इति चेत्?, किमुपाधिभेदः पारमार्थिकः। सोऽपि व्यावहारिक एवेति चेत्?, तत्किं ब्रह्मणः क्षेत्रज्ञस्य च परमार्थतो भेदे क्षेत्रादिसम्बन्धस्तस्य पारमार्थिक एव क्षेत्रादिसम्बन्ध एव नास्ति। परमार्थसन् किं ब्रह्मणि तदभेद आपाद्यते चेत्? तर्हि मुक्त्यर्थं ब्रह्मचर्यादिखेदमनुभवतस्तव किं निवारणाय यत्नः। अपारमार्थिकक्षेत्रादिसम्बन्धनिरासायेति चेत्? शशशृङ्गादिनिर्विशेषस्य क्षेत्रादिसम्बन्धस्यानुकूल्यप्रातिकूल्ययोरसमर्थस्य निराकरणे यत्नानर्थक्यात्। निवृत्तिरपि क्षेत्रादीनामपारमार्थिक्येवेति यदि तदा सुतरामायासवैफल्यम्। क्षेत्रादिसम्बन्धापारमार्थिकत्वज्ञानमेव तत्त्वज्ञानं तदुत्पादनाय च योगाभ्यास इति

---

१. 'तदभेदखण्डनम्' इति पाठो युक्तः प्रतिभाति भेदाभेदयोरैक्यात्, अत एवोत्तरत्र 'यच्चाभेदसाधनं तद्भेदसाधनमि'त्युक्तम्।

नायासवैफल्यमिति चेत्? एवं सति सत्यज्ञानविषयत्वेन क्षेत्रादिसम्बन्धापारमार्थिकत्वं ज्ञानं च तद्विषयं पारमार्थिकमित्यायातं तथा चाद्वैतं पारमार्थिकं न भवतीत्येवं विद्यया निर्व्यूढमिति विद्यैवानर्थकरी। अथ क्षेत्राद्यपारमार्थिकत्वज्ञानमप्यसदेव तदा क्षेत्रादीनां पारमार्थिकत्वमयत्नसिद्धम्।

अथ ब्रह्मसाक्षात्कारो विद्या तया अविद्या निवर्तते इति मतं तदा नित्यस्य ब्रह्मणो योगाभ्यासजन्यत्वमित्यभ्युपगतं स्यात्, तथा च नित्यत्वविरोधः योगाभ्यासवैयर्थ्यञ्च तदात्मिकाया विद्याया नित्यसत्त्वात्।

अथ शरीराहंप्रत्ययादिरेव मिथ्याज्ञानमित्युभयसिद्धम्। परन्तु शरीरादयः पारमार्थिकास्तेभ्यः कश्चिदन्य आत्मा, स च परमात्मभिन्नः, परमात्मा च नित्यज्ञानेच्छासमवायीत्यादि तावज्ज्ञानं नैयायिकैर्मन्यते। वयं तु ब्रह्मैव केवलं परमार्थसदिति श्रुत्या सम्पाद्य तथैव युक्त्याऽपि परिभाव्य निरन्तरयोगाभ्यासवशात् तादृग्विषयकसाक्षात्कारमुत्पाद्य ब्रह्मसाद्भवतीत्यपवृक्त इत्युच्यत इत्यङ्गीकुर्मः। तथा च न किञ्चिदनुपपन्नमिति चेत्? श्रुत्यादिजनितज्ञानानां ब्रह्मणो भिन्नाभिन्नत्वविकल्पकरणापरित्यागात्। तस्माद्वेदान्तिनां मुमुक्षाऽप्यसती प्रवृत्तिरप्यसती मोक्षज्ञानमप्यसद् विद्याऽप्यसती योगाभ्यासोऽप्यसन्नभेदोप्यसन्नेवेति साधु तीर्थिकत्वाभिमानः। स्वर्गापूर्वादीनान्तु सत्त्वसङ्कथाऽपि नास्ति। ब्रह्मभिन्नप्रमाणस्याप्यसत्त्वेन ब्रह्माप्यप्रामाणिकमेवेति भवन्तु वेदान्तिनः स्वस्थाः।

अद्वैते किं प्रमाणमित्यत्राद्वैतं प्रतीतं न वा? आद्ये प्रश्नानुपपत्तिः। न ह्यप्रतीतदेवदत्तो देवदत्तः श्यामो गौरो वेति पृच्छति। द्वितीये सा प्रतीतिः प्रमा न वा आद्ये यत्तां प्रति करणन्तदेवाद्वैते प्रमाणमित्यवेहि। अन्त्ये अद्वैताप्रमां प्रति किं प्रमाणमिति प्रश्नार्थः। तथा च विरोधपराघात एवेत्यादि खण्डनमनुपपन्नम्। अद्वैते प्रमाणं पृच्छतो नैयायिकस्याद्वैतं प्रतीतमेव। न हि घटाद्वैतं घटे नास्ति ब्रह्माद्वैतं ब्रह्मणि वा। किं तर्हि घटाद्वैतं पटवृत्ति न वेति प्रश्नार्थः, ब्रह्माद्वैतं घटादिवृत्ति न वेति वा। घटादिवृत्तित्वञ्च तद्घटादावेव प्रतीतं तदवृत्तित्वं चाकाशादौ, तथा चान्वयव्यतिरेककोट्योः प्रसिद्धिः। अन्वयकोटिश्च तव व्यतिरेककोटिश्च भेदवादिनामिति कथं प्रश्नानुपपत्तिः। अन्यथा प्रश्नानन्तरं यत्त्वया पृच्छ्यते तदपि न घटेत—तथा हि अद्वैते किं प्रमाणमिति प्रश्नानन्तरं प्रतीतं न वेति यत्त्वया अद्वैतविषयप्रतीतिविषयकः प्रश्नः क्रियते तत्राद्वैतप्रतीतिश्चेत् प्रतीता तदा प्रतीतं न वेति कथं प्रश्नः, न चेत्तदा सुतरां न प्रश्नः। एवं सा प्रतीतिः प्रमा न वेति प्रश्नो न सम्भवतीति प्रश्नखण्डने त्वया क्रियमाणे प्रश्नखण्डनमस्माभिः सञ्चारणीयम्।

ननु भेदो न प्रतीतः प्रतियोगी भेदं निरूपयति[1] भेदेन अभेदेन वा प्रतिपन्नः?, न तावदाद्यः, निरूपणीयभेदाप्र(ती?)तिपत्तौ भेदेन प्रतीत्यसम्भवात्, सम्भवे वा तत्राप्यनुयोगिनिवृत्तेः। न द्वितीयः, प्रथममभेदेन प्रतिपन्नस्य भेदग्रहानुपपत्तेः, प्रथममभेदप्रतीत्या अभिन्नत्वेन व्यवस्थापितस्य वस्तुनो भेदे भिन्नत्वेन व्यवस्थापितस्याप्यभेदः स्यादिति मदिष्टस्यैव त्वया सम्पादितत्वात्। भेदाभेदाभ्याञ्च तृतीयः प्रकारो न सम्भवत्येव। **'परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकतापि विरुद्धानामुक्तिमात्रविरोधतः'** इति त्वयैव व्यवस्थापनीयत्वात्। तस्माद् भेदो नास्तीति चेत्?

मैवं, न भिन्नत्वेन प्रतियोगिग्रहो नाप्यभिन्नत्वेन, किं तर्हि घटत्वादिना। एवमधिकरणस्यापि परस्परविरोधश्च न प्रतीतौ किन्तर्हि? वस्तुस्वाभाव्ये, वस्तुनो भिन्नत्वमभिन्नत्वं वेत्यतः प्रकारान्तरं न सम्भवतीति ब्रूमः। प्रतीतिस्तु सामग्रीवशात् कदाचिद्भिन्नत्वेन कदाचिदभिन्नत्वेन कदाचिद् घटत्वेन कदाचित्पृथिवीत्वेन द्रव्यत्वेन सत्त्वेन वेति न किञ्चिदनुपपन्नम्।

अथ यदि प्रतियोगिप्रतीतावपि भेदाभेदयोरेकतरः प्रकाशेऽन्तर्भविष्यतीति तवाग्रहस्तदा अभेदेन प्रतीतः प्रतियोगी भेदे निरूपक इति गृहाण, आरोप्य निषिध्यत इत्यस्माकं सिद्धान्तरहस्यात्। इदं रजतमित्यारोपानन्तरं नेदं रजतमिति भेदग्रहात् तत्र स्वरसतो ह्यारोपोऽन्यत्र त्वाहार्य इति विशेषः। घटः पटो न भवतीति हि प्रतीतिस्तथा घटः पट इत्यारोप्य नेति निषेधप्रतीतिः, यद्येवं तदाऽभेदांशस्यारोपत्वं निषेधभागस्य प्रमात्वं कथं यावता वैपरीत्यस्यापि सम्भवादिति चेत्? न, प्रवृत्तिसंवादादिना भेदग्रहस्य प्रामाण्यावधारणात्। पटाद् भिन्नत्वेन गृहीतस्य घटस्य जलाहरणादीनां पटकार्यविलक्षणकार्याणामवधारणात्। रजताभिन्नत्वेन गृहीतायाश्च शुक्ते रजतकार्यकटकमुकुटादीनामदर्शनादभेदग्रहस्या-प्रामाण्यावधारणात्। तस्माद् घटत्वादिना प्रकारेण गृहीते प्रतियोगिनि स्मृते वा पटत्वादिना प्रकारेण गृहीतेऽधिकरणभेदेनान्योन्याभावात्मना संयुक्तविशेषणातताया-मिन्द्रियप्रत्त्यासत्तौ सत्यां भेदप्रमितिरिति युक्तमुत्पश्यामः।

किञ्च भेदप्रतीतौ न तवापि विप्रतिपत्तिर्येन तव सामग्रीवैकल्योद्भावनं घटेत। किन्तु सा प्रतीतिरप्रमेति तवाभ्युपगमः। प्रमेत्यस्माकम्। तथा च भेदग्रहसामग्रीवैकल्योद्भावनस्य स्वोत्पत्तिसामग्रीवैकल्यविभावनस्येव तवोपहास-जनकत्वमिति।

---

१. अत्र पाठः त्रुटित इव भाति।

ननु भेदग्रहणपूर्वकं वा वस्तुग्रहणं, वस्तुग्रहपूर्वकं वा भेदग्रहणं, भेदवस्तुनोर्वा युगपदेव ग्रहणम्? आद्ये प्रतियोगिग्रहाधीनो भेदग्रह इति सिद्धान्तव्याकोपः। भेदस्य निष्प्रतियोगिकस्य ग्रहणाशक्यता च। विशेषणतया प्रत्यासत्त्या ग्राह्यो भेदस्तथा च वस्तुनोऽग्रहे किंविशेषणीभूतो भेदो भासते। द्वितीये तु प्रथममभिन्नतया यद्वस्तु गृहीतं तत् पश्चात् कथमिव भिन्नतया गृह्येत। तृतीये तु वस्तुग्रहणं भेदग्रहणं प्रति कारणमिति तवाभ्युपगमः। स च भेदवस्तुनोर्युगपद्ग्रहे व्याहन्येत, कार्यकारणधियोर्यौगपद्यायोगात्, यौगपद्ये वा सव्येतरविषाणवत् कार्यकारणभावानुपपत्तिः। तस्माद्भेदग्रहो नास्त्येवेति चेत्?

मैवं, घटत्वपटत्वादिना प्रकारेण प्रतियोग्यनुयोगिनोर्ग्रहणानन्तरं भेदप्रमेत्युक्तत्वात्। अथ कुटिलवचनैरेव तव सन्तोषस्तदा त्वत्कृतविकल्प-त्रयाभ्युपगम एव, धारावाहिकस्थले भेदपूर्वकमेव वस्तुग्रहणम्। वस्तुग्रहपूर्वकञ्च भेदग्रहणं पूर्वोत्तरज्ञानयोरुभयविषयत्वादुभयग्रहस्योभयग्रहानन्तर्यात्। अन्यत्रापि यत्र भेदग्रहस्तत्र भेदवस्तुनोर्युगपदेव ग्रहणम्। न हि भेदग्रहः क्वचिदपि वस्तुविषयः, अवच्छेदध्रौव्यात्। किन्तु भेदग्रहस्याग्रहपूर्ववस्तुग्रहः केवलोऽप्यस्तीत्यन्यदेतत्। कारणत्वन्तु तस्यैव पूर्ववर्तित्वादित्यन्योन्याभावग्रहे, स्वरूपभेदे तु विकल्प एव नावतरति तस्य वस्तुस्वरूपत्वात्। वैधर्म्योत्तरसविकल्पकेन ग्रहे युगपदेव ग्रहणम्। निर्विकल्पकेनापि विशकलितयोर्युगपदेव ग्रहणम्। उपाधिरूपवैधर्म्यस्थले तु तत्सामग्रीसमावेशवशाद्यथायोगं त्रयमपीत्यलं भूतविकल्पेषूत्तरोत्तरवैचित्र्येणेति। व्यावहारिकभेदग्रहे यादृशी तव सामग्री सैव पारमार्थिकभेदग्रहेऽप्यस्माकमपीति युक्त्यन्तरं सर्वत्र भेदग्रहसामग्रीवैकल्योद्भावनावसरे एव विधेयमुत्तरोत्तरयुक्ति-प्रतिसन्धानविधुराणां पुरस्तात्।

ननु वैधर्म्यं भेदो न भवति। तथा हि—घटपटयोर्घटत्वपटत्वरूपस्य वैधर्म्यस्यापाततोऽङ्गीकारेऽपि तयोस्तादृशधर्मान्तराभावाद्भेदानुपपत्तावभेदपर्यवसाने तदा लिङ्गितयोर्घटपटयोरप्यभेदपर्यवसानात्। घटत्वपटत्वयोरपि वा तादृशवैधर्म्याङ्गीकारेऽनवस्थापात इति चेत्? न, घटत्वेन पटत्वेन स्वत एव विलक्षणेन घटपटयोर्भेदसिद्धौ घटपटरूपाश्रयात्मकवैधर्म्येण घटत्वपटत्वयोरपि भेदात्। एवं सत्यन्योन्याश्रय इति चेत्? न, घटपटयोर्भेदग्रहावसरे घटत्वपटत्वयोरपि भेदग्रहणस्यानावश्यकत्वात्। न हि पटत्वाद् भेदेन गृह्यमाणं घटत्वं प्रतियोगितावच्छेदकं घटत्वाद्भेदेन गृह्यमाणं पटत्वं वाऽधिकरणतावच्छेदकमित्यभ्युपगम्यतेऽस्माभिः। किन्तर्हि? स्वरूपत एव गृह्यमाणे घटत्वपटत्वे वास्तवभेदवतो प्रतियोगित्वमधिकरणत्वञ्चावच्छिन्त इति ब्रूमः।

ननु यदि घटत्वपटत्वयोस्तदानीं ततो भेदग्रहो नापेक्षितस्तदा घटत्वमेव प्रतियोगिनमधिकरणञ्चावच्छिन्द्यात्। तथा च घटोऽपि घटभिन्नो गृह्यतेति चेत्? कः सन्देहो यदि भिन्नः स्यात्। कथं न भिन्न इति चेत्? न, कदाचिदपि तत्त्वेनाग्रहात्। कथं न ग्रह इति चेत्? न, ग्राह्याभावादिति। वस्तुतस्तु वास्तवभेदवत्त्वेन प्रतियोग्यधिकरणतावच्छेदकधर्मयोर्विशेषितत्वात्। स एव वास्तवो भेदस्तयोः। कथं गृह्यते वैधर्म्याभावादिति चेत्? भिन्नयोराश्रयोरेव वैधर्म्यात्। तथा चान्योन्याश्रय इत्युक्तमिति चेत्? न, अन्योन्यभेदग्रहकालेऽन्योन्यभेदग्रहस्यानुपजीव्यत्वात्। किञ्च घटत्वे समवेतधर्माभावेऽपि घटेतरावृत्तित्वे सति सकलघटवृत्तित्वादे-र्धर्मस्याङ्गीकारात्। एवं तत्र तत्रापीत्यनवस्था स्यादिति चेत्? न, अस्तु [तथा,] परन्तु घटपटग्रहकाले तेषामपि धर्माणां ग्रहो नापेक्ष्यते येनानवस्थामूलक्षतिः स्यात्। तावतां धर्माणामङ्गीकारे सप्तपदार्थीव्याकोप इति चेत्? न, यदा यदा यस्य धर्मस्य त्वया सप्तपदार्थीबहिर्भावः शङ्कनीयः तद[ा]स्माभिरमीषामेव पदार्थनामन्योन्य-विशेषणविशेष्यभावापादनेन साक्षात्सम्बन्धपरम्परासम्बन्धस्वरूपसम्बन्धैः सप्तपदार्थ्यामेवाभिनिवेशनीयत्वादिति सिद्धो वैधर्म्यभेदः।

ननु सत्यामद्वैतश्रुतौ कथं भेदप्रत्यक्षमभिमतविषयं स्यात्। प्रत्यक्षेणैव बलवता श्रुतिजबुद्धिर्बाधनीयेति चेत्? बाध्यतां समाने विषये, न हि घटपटौ भिन्नाविति प्रत्यक्षं घटपटयोरिव श्रुतिजधिया समं स्वस्याभेदं गृह्णाति। तथा च तत्र लब्धपदा श्रुतिरद्वैतं बोधयतीति प्रत्यक्षश्रुतिजधियोरभेदे त्वबाध्यबाधकभाव इति चेत्?

मैवं, भेदग्राहिप्रत्यक्षस्य श्रुतिजधिया सममद्वैते न केवलं त्वदभीष्टसिद्धिरपि तु ममाप्यभीष्टमेवं सेत्स्यत्येव यावता सकलानुभूयमानभेदप्रत्यक्षस्य श्रुतिजधिया बाध्यत्वस्य त्वयैवोपपादितत्वात्।

ननु घटपटभेदग्राहिण्या धिया घटपटयोरेव भेदः परस्परं ग्राह्यो न तु घटात्पटाच्च स्वस्या अपि। तत्र तस्याः स्वप्रकाशरूपत्वेऽप्यशक्तेः स्वप्रकाशतया हि स्वं स्वविषयश्च भासते न तु स्वविषये स्वप्रतियोगिको भेदोऽपीति, नैयायिकैश्च स्वप्रकाशताया अनभ्युपगमात्। तथा च घटपटयोः स्वभेदग्राहिप्रत्यक्षेण श्रुत्याऽभेदे सिद्धे तदभिन्नाभिन्नतया घटपटयोरप्यभेदोऽवर्जनीय इति चेत्?

मैवं, यावता वैपरीत्यस्यापि सम्भवात्। तथा हि दृढतरप्रत्यक्षेण घटपटयोर्भेदे गृहीते घटभिन्नपट[ा]भिन्नबुद्धेरपि घटभेदसिद्धिरेवं पटभिन्नघटाभिन्न-बुद्धेरपि पटभेदसिद्धिः। भेदप्रत्यक्षं श्रुत्या कलुषीकृतप्रामाण्यं कथमुत्तरोत्तरबुद्धिधारा-

भेदसाधकं स्यादिति चेत्? त्वदभिमतपरतायां श्रुतिरपि सन्दिग्धप्रामाण्या कथं प्रत्यक्षं बाधेतेति तुल्यम्।

ननु घटभिन्नत्वं पटे प्रत्यक्षसिद्धं, पटभिन्नत्वं बुद्धौ न त्वयाऽभ्युपगम्यते। तथा च घटभिन्नाभिन्नतया बुद्धेः कथं घटभेद इति चेत्? तर्हि त्वत्स्वीकृतो घटाभिन्नाभिन्नत्वमपि हेतुः पटेऽस्माभिर्नाङ्गीक्रियते, येन घटपटयोरभेदः स्यात्। एवञ्च यथा यथा तदभिन्नाभिन्नत्वेन त्वया भेदः साध्यः तत्र तत्र तद्भिन्नाभिन्नतया मया भेद एव साधनीय इत्यादिभेदस्य प्रत्यक्षसिद्धतया तदुत्तरोत्तरबुद्धिधाराभेदेऽपि वज्रकराल इत्येव—

**आद्यधीवेद्यभेदीयाप्यऽन्यथाऽनुपपन्नता।**
**स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम्[१]।।**

इति काकुनकारमात्रेण त्वद्गाथाऽस्माभिरपि पठनीया।

नन्वस्तु प्रतिबन्दिग्रहः। स्वरूपं तावद्विचार्यतां, घटपटभेदग्राहिधिया समं घटपटयोर्भेदः कथं ग्राह्यः, यदि बुध्यन्तरेण तदा तत्राप्यनुयोगस्तदवस्थः, एवमुत्तरोत्तरबुद्धिधारानुसरणे चरमबुद्ध्याऽपि समं भेदाग्रहे तत्र पदमारोप्य श्रुतिः पूर्वपूर्वविषया तद्विषयपर्यन्तमद्वैतमासञ्जयिष्यत्येवेति चेत्?

मैवम्, अनयोर्भेदो न गृहीत इति यदेव त्वयोदाहरणीयं तयोस्तद्वाक्येनैव प्रमाणेन तदानीमेव भेदो ग्राह्यः, न ह्यनयोरिति त्वद्वचसा द्वित्वं न भासते। अनेन समं भेदो न गृहीत इत्यभिधाने च सुतरां भेदग्रहः सममित्यस्य भेदोपस्थापकत्वात्। वादिवाक्यत्वेन मद्वाक्यं प्रमाणमेव न भवतीति चेत्? विषयाबाधादेव प्रामाण्याभ्युपगमात्। तर्ह्यनयोरभेद इति मम वाक्यादभेद एव प्रतीयतामिति चेत्? न, तत्रायोग्यतया परस्परव्याघातात्। अनयोरित्यभिधेयद्वित्वात्मकत्वान्वयस्य बाधितत्वात्। एवञ्च श्रुतिपदारोपणार्थं पूर्वं परित्यज्य यदेवोत्तरं त्वयोदाहर्तव्यं तत्र स्वरूपवैधर्म्यान्योन्याभावभेदानां द्वित्वबहुत्वपृथक्त्वादीनां वा त्वद्वचनादन्यतमोपस्थितेरावश्यकतया साक्षादर्थतो वा भेदसिद्धौ बाधबुद्धिपरम्परया च त्वदभिमतार्थसाधनपरश्रुतेः सुदूरमुत्सारणात् प्रत्यावृत्तिशङ्का दूरनिरस्तेति—

**सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा।**
**निवृत्ताऽद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते।।**

---

१. खण्डनखण्डखाद्ये, पृ. १०२ द्रष्टव्यम्।

इति नञन्वयपूरणेन[१] त्वद्गाथैव नः पक्षेऽपि। किञ्च घटपटयोः प्रत्यक्षेण भेदे गृहीते क्रमेण तयोरप्यभेदपर्यवसानं न तावत् श्रुत्या, त्वयैव श्रुतेस्तद्विषयपरीहारेण प्रवृत्त्यभ्युपगमात्। तद्भिन्नाभिन्नत्वादीनामपि हेतूनां प्रत्यक्षबाधादेव तत्राप्रवृत्तेः। उत्तरोत्तरबुद्धिधारायाः प्रत्यक्षताभेदो न गृह्यत इति घटपटयोरपि भेदो मास्त्विवति जात्युत्तरभेदः। न हि उत्तरोत्तरबुद्धिभेदग्राहि-प्रत्यक्षोपजीवकं घटभेदग्राहिप्रत्यक्षं तद्धि सामग्रीनिबन्धनोत्पत्तिनिमित्तविषयाबाधात् प्रमाभूतं, तत्परिहारेण विषयान्तरेण वर्तमानयापि श्रुत्यापि बाधितुं न शक्यते। तथा च घटपटौ विहाय जगदभेदं बोधयतु श्रुतिः घटपटभेदप्रत्यक्षकुहरलीनं भेदं सर्वथापि नास्कन्दयितुमीष्टे। एवमुत्तरोत्तरबुद्धिधारायामपि यत्र भेदो ग्राह्यस्तत्र पुनः श्रुतेः प्रवृत्तिरसम्भाविनी दैक्षादिपशावहिंसाश्रुतेरिव तथा च—

**आद्यधीवेद्यभेदीयाप्यन्यथाऽनुपपन्नता।**
**स्वज्ञानापेक्षणादन्ते बाध्यते नाद्वयागमैः।।**

इति त्वद्गाथावैरूप्यमस्तु।

किञ्च यद्यावयोरभेदस्तदा जानीहि मम हृदि किमस्ति। ज्ञायते एव यद्यवच्छेदकभेदो न स्यादिति चेत्? अवच्छेदकभेदमङ्गीकरोषि चेदवच्छेद्यभेदे कस्तव द्वेषः। सोऽप्यस्तु व्यावहारिक इति चेत्? तत्किमवच्छेदकभेदः पारमार्थिकस्तथा च जितमस्माभिः। अवच्छेदकभेदोऽप्यपारमार्थिक इति चेत्? तर्हि कथं मम हृदयं न जानासि ब्रह्माभिन्नसर्वम्। अतस्तव हृदि ब्रह्मास्ति चेत्? नूनमृषरात्मासि यदेवं ब्रह्म जानानोऽपि नापवृज्यसे। अविद्याकवलनात्तथा न जायत इति चेत्? अविद्यां ब्रह्मभिन्नां मन्यमानः कथं वा न लज्जसे। नन्वस्तु भेदोऽस्माभिः परं नाङ्गीक्रियत इति चेत्? नास्ति भेद इत्यङ्गीकारादेव भेदः, अभावाकारेऽपि प्रतियोगिनो भेदस्याङ्गीकरणात्। तस्मात्—

**एकं भेदास्त्रमादाय नान्यङ्गणयतः क्वचित्।**
**आस्ते न धीरवीरस्य भङ्गः सङ्गरकेलिषु[२]।।**

किञ्च सर्वाभ्यर्हितं ब्रह्म तदेव, परमात्मेत्युदीरयामः। तस्यापकृष्टैरितरैः समं भेदेन ज्ञानेन मुमुक्षूणां श्रवणमनननिदिध्यासनादौ श्रुतिबोधिते प्रवृत्तिरस्तु, अन्यथा

---

१. निवृत्तौ नाद्वयाम्नायैः.........इत्यादिरीत्या योजनेन।

२. अयं श्लोकः खण्डनखण्डखाद्ये इत्थं प्राप्यते—'एकं ब्रह्मास्त्रमादाय...........।'

(पृ.सं.-१०९)

भिन्नत्वेनाप्रतिपन्ने परमात्मनि वा शरीरादीनां साक्षात्कारे सत्येव ब्रह्मसाक्षात्कारोऽपि सम्पन्न इति वृथा योगाभ्यासादिक्लेशस्तदुपदेशो वेत्यवश्यं भेदज्ञानमनुसरणीयम्। अत एव शरीरादिभिन्नत्वेनात्मज्ञानमेव तत्त्वज्ञानम्। तथा च—

**धीधना! बाधनायास्यास्तदा प्रज्ञां प्रयच्छथ।**
**क्षेप्तुं चिन्तामणिं पाणि-लब्धमब्धौ यदीच्छथ[१]।।**

इति तुल्यैव गाथा।

एवं सिद्धे पारमार्थिके भेदे आत्मनानात्वसिद्धिः—(१) आत्मत्वं नानावृत्ति, जातित्वात्, घटवत्, (२) देवदत्तात्मा चैत्रात्मवृत्त्यन्योन्याभावप्रतियोगी, चैत्रवृत्त्यत्यन्ताभावप्रतियोगिधर्माधिकरणत्वात्, यच्चैत्रात्मवृत्त्यन्योन्याभावप्रतियोगि न भवति, न तच्चैत्रात्मवृत्त्यन्ताभावप्रतियोगिधर्माधिकरणं तस्मात् चैत्रात्मवृत्त्यन्योन्याभाप्रतियोगीति व्यतिरेकी, (३) ब्रह्म चैत्रमैत्रादिभिन्नम्, अनित्यज्ञानानधिकरणत्वात्, यदेवं तदेवं, यथा घटः, अनित्यज्ञानानधिकरणञ्चैतत्, तस्मात् चैत्रादिभिन्नम्, (४) अहं ब्रह्मप्रतियोगिकपारमार्थिकभेदाधिकरणं, सुखाद्यत्यन्ताभावविरोधिधर्माधिकरणत्वात्, दुःखात्यन्ताभावविरोधिधर्माधिकरणत्वात्, द्वेषात्यन्ताभावविरोधिधर्माधिकरणत्वात्, धर्मात्यन्ताभावविरोधिधर्माधिकरणत्वात्, अधर्मात्यन्ताभावविरोधिधर्माधिकरणत्वात्, भावनात्यन्ताभावविरोधिधर्माधिकरणत्वात्, नित्यज्ञानानधिकरणत्वात्, अनित्यज्ञानात्यन्ताभावविरोधिधर्मा(न?)धिकरणत्वात्, नित्येच्छानधिकरणत्वात्, [अ]नित्येच्छात्यन्ताभावविरोधिधर्माधिकरणत्वात्, नित्यप्रयत्नानधिकरणत्वात्, अनित्यप्रयत्नात्यन्ताभावविरोधिधर्माधिकरणत्वाद्वा, न यदेवं तदेवं यथा ब्रह्म तस्मात्तथा। वैचित्र्यापत्तिरेव विपक्षबाधकस्तर्कः सर्वत्रेति।

ननु नित्यज्ञानाद्यधिकरणत्वं न ब्रह्मणः किन्तु तद्रूपत्वमेव, श्रूयते हि 'नित्यं ज्ञानमानन्दं ब्रह्म' इति चेत्? यदि ब्रह्माभिन्नं सर्वं तदाऽनित्यज्ञानेच्छादिरूपत्वं तस्य किं नाभ्युपैषि। 'नित्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुत्या नित्यज्ञानसुखात्मकतामात्रं प्रतिपादयन्त्या दुःखादिरूपताऽप्रतिक्षेपादिति चेत्? तत्किम् 'एकमेवाद्वितीयं ब्रह्मे'ति श्रुतिगवीं हन्तुमुद्यतोऽसि, यया दुःखाद्यात्मकत्वमपि ब्रह्मणः प्रतिपाद्यते।

अस्तूभयरूपत्वं ब्रह्मण इति चेत्? तर्हि सुखलोलुपतया दुःखात्यन्ताभावस्वरूपमुक्तिवादिनमुपहससि स्वयञ्च दुःखमयीं मुक्तिमङ्गीकरोषि इति नूनमुन्मत्तोऽपि

१. खण्डनखण्डखाद्ये, पृ. १३४ द्रष्टव्यम्।

त्वया जितः। यद्यपि ब्रह्मणः सुखदुःखरूपत्वं तथाऽपि मुक्तिदशायां सुखरूपताभिव्यक्तिमात्रं न तु दुःखरूपताभिव्यक्तिरपि येन दुःखमपि मुक्तिः स्यात्। श्रूयते हि 'आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठित'मिति चेत्? तत्किं मुक्तौ ब्रह्मणः स्वरूपमपि हीयते तर्हि सुखस्वरूपताऽपि कथं स्यात्। एवमनियमे वा न निःशङ्कः प्रवर्तेत। श्रुत्यवष्टम्भादेव प्रवर्तत इति चेत्? श्रूतीनामेव त्वद्दिशा परस्परकलहात्।

तर्हि श्रुतीनां का गतिः? 'नित्यं विज्ञानमानन्दं ब्रह्मेति' श्रुतेस्तावदयमर्थः—विशिष्टं ज्ञानं यस्येति विज्ञानं, ज्ञानस्य च विशेषो नित्यतैव। आनन्दः सुखं, तद्यस्यास्तीत्यानन्दं, मत्वर्थीयाच्प्रत्ययेन नपुंसकलिङ्गताऽपि समासाद्यते। एतच्चापरब्रह्मस्वरूपकथनम्। 'द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव चे'त्यत्र किमपरं ब्रह्मेत्याकाङ्क्षाबलात्। तथा च **आनन्दम्**-आनन्दवत्त्वं, **ब्रह्मणः**-अपरब्रह्मणः, **रूपं**-स्वरूपम्। चो हेतौ। यतो मोक्षे जीवन्मुक्तिदशायां तत् **प्रतिष्ठितं**-व्यवस्थितम्। जीवन्मुक्तिदशायां परमानन्दसाक्षात्कारादित्यर्थः। अन्यथा ब्रह्मणो नित्यत्वे सुखमपि नित्यमितीदानीमपि साक्षात्क्रियेत। ब्रह्मस्वरूपस्य सुखस्यानित्यत्वमसम्भावितमेव। नित्यस्यापि सुखस्याविद्यादशायां नाभिव्यक्तिरिदानीमिति चेत्? तकिमविद्यायां निवृत्तायां निवृत्ते शरीरेन्द्रियादौ नित्यसुखसाक्षात्कारः। सुखमुत्पद्यते पूर्वं, सन्नेव वा साक्षात्कारः स्वाभिन्नं सुखमिदानीं न विषयीकरोति, मोक्षदशायां करोतीति मतम्। आद्ये तस्य साक्षात्कारस्योत्पादचिन्ता तावदास्ताम्। (तस्य?) भावस्य तस्य निवृत्तौ पुनः संसारा(परा?)वृत्तिरावश्यिकी। उत्पन्नोऽपि ध्वंसवदविनाशीति चेत्? तर्हि ब्रह्मभिन्नत्वे(न?)[1] कथं नाद्वैतभङ्गः। ब्रह्माभिन्नत्वे (न?)[2] कथमुत्पादः। द्वितीये तु साक्षात्काराभिन्नस्य नित्यस्य सुखस्य कोऽग्रे विषयीभाव इति त्वमेव परिभावय। अविद्यानिवृत्तिरेव विषयीभाव इति चेत्? तस्या एव किं निवर्तकम्। ब्रह्मसाक्षात्कारश्चेत्? स पूर्वमेव किं तां न न्यवर्तयत्। पूर्वं[स]नासीदिति चेत्? तत्किं तदभिन्नं ब्रह्मापि नासीत्। ब्रह्मभिन्न एव साक्षात्कारो विद्याभावाद्विद्याविरोधिनीमविद्यां निवर्तयतीति चेत्? साक्षात्कारः सत्यश्चेत् तेनैव भेदः, असत्यश्चेत्तदाऽसत्यत्वाविशेषे कथं न विपरीत एव निवर्त्यनिवर्तकभावः। तस्माद् ब्रह्म पमरेश्वर इत्यनर्थान्तरम्।

तच्च क्षेत्रज्ञेभ्यो भिन्नं नित्यज्ञानेच्छाप्रयत्नाधिकरणं दुःखसुखधर्माधर्मभावनाद्वेषरूपक्षेत्रविशेषगुणानधिकरणं जगत्कर्तृसंहतृ च। (क्षेत्रज्ञात्मभिन्नत्वेन?)

---

१-२ अत्रोभयत्र मातृकायां तृतीयान्तपदप्रयोगो दृश्यते। सप्तम्यन्तत्वे तु स्वारस्याधिक्यम्।

शरीरादिभिन्नत्वेन क्षेत्रज्ञस्य च साक्षात्कारः श्रवणमनननिदिध्यासनादेरनन्तरभावी सवासनमिथ्याज्ञानोन्मूलनव्यापारः समानाधिकरणदुःखप्रागभावासमानकालीनदुःख-ध्वंसरूपं मोक्षं जनयित्वा निवर्तते। अदृष्टनाशात्स्वजयसंस्काराददृष्टनाशा(शका)देव वा तन्निवृत्तिरिति। स च प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयव-तर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानरूपषोडशधाविभक्त-सप्तपदार्थीप्रत्याकलनपरिशोधितपरमन्यायमार्गात्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्ति-दोषप्रेत्यभावफलदुःखापवर्गरूपहेयोपादेयभूतद्वादशविधप्रमेयसमूहालम्बनरूपसाक्षात्कार-समनन्तरभावी केवलात्मनिर्विकल्पकरूपः। तत्र च निर्विकल्पके आत्मभिन्नं न किमपि भासते। निर्गुणनिरञ्जनादिश्रुतयोऽपि तमेवावधीकृत्य प्रवृत्ताः। पारमार्थि-कत्वापारमार्थिकत्वविभागोऽप्युपनिषदि साक्षान्मोक्षानुकूलत्वतदनुकूलत्वविरहप्रयुक्त एव। **शङ्कराचार्य**प्रभृतीनामपि तदेव तात्पर्यमिति युक्तमुत्पश्यामः। तस्मात्—

**प्रामाणिको निषेधश्चेत् भेदः प्रामाणिकस्तदा।**
**निषेधश्चेन्न भेदस्य भेदः प्रामाणिकस्तदा।।**

**अद्वैतसिद्धिश्चेत्सत्या सिद्धं द्वैतं ततस्तया।**
**अथ नाद्वैतसिद्धिश्चेत् सिद्धं द्वैतं ततस्तया।।**

**सत्या श्रुत्याऽऽस्थिते द्वैते कथं द्वैतं न सेत्स्यति।**
**असत्यैरास्थिते द्वैते कथं द्वैतं न सेत्स्यति।।**

**अद्वैतं कोऽपि धर्मश्चेद् ब्रह्मण्यस्तीति मन्यसे।**
**तर्हि द्वैतं समायातं न चेद् द्वैतं निरङ्कुशम्।।**

**ब्रह्मैवाद्वैतमिति चेत्? न विवादस्तदाऽऽवयोः।**
**ब्रह्मणः श्रुतिवेद्यत्वं केन नाभ्युपगम्यते।।**

**आत्मन्याजानिकं भेदमजानाना मुमुक्षवः।**
**माभूवन्निष्फलायासा इति भेदः प्रकाशितः।।**

**।। इति महामहोपाध्यायश्रीशङ्करमिश्रकृतौ भेदप्रकाशापरनामधेयं भेदरत्नं समाप्तम् ।।**



पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **कातन्त्रव्याकरणम्** : आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां **कातन्त्र-वृत्ति-टीकाभ्यां,** श्रीमत्त्रिलोचनदासकृतया **'कातन्त्रवृत्तिपञ्जिका'**टीकया, कविराजसुषेणशर्मकृतया **'कलाप-चन्द्र'**टीकया, अथ च डॉ. जानकीप्रसादद्विवेदिकृतया **समीक्षया,** विवरणात्मिकया भूमिकया, अनुसन्धानात्मक-परिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः — प्रथमो भागः ३५०.००
द्वितीयो भागः खण्डम्-१ ५००.००
द्वितीयो भागः खण्डम्-२ ६००.००

२. **परशुरामकल्पसूत्रम्** : तन्त्रशास्त्रस्य सूत्रात्मकोऽयं ग्रन्थस्तन्त्रसिद्धान्तैः सह सर्वासामुपासनानां प्रतिपादकोऽस्ति। श्रीरामेश्वरवृत्तेर्मुख्यांशेन समलङ्कृतो **नीरक्षीरविवेका**भिधेन **भाषाभाष्येण** संवलितः प्रो. विद्यानिवासमिश्रैः, डॉ. परमहंसमिश्रैश्च सुसम्पाद्य प्रकाशितः — २८०.००

३. **सौभाग्यरत्नाकरः** : तन्त्रशास्त्रस्य समृद्धोऽयं ग्रन्थः श्रीविद्यानन्दनाथविरचितः सौभाग्यसंवर्द्धनस्य सदुद्देश्येन तरङ्गायितः श्रीविद्यायाः सम्प्रदायसिद्धानां राद्धान्तानां समुपासनपद्धतीनाञ्च प्रतिपादको रत्नाकरसदृशो विराजते। स्वात्मविमर्शाख्यया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पाद्य प्रकाशितः— ३५०.००

४. **प्राणतोषिणी** : श्रीरामतोषणभट्टाचार्येण प्रणीतस्तन्त्रशास्त्रस्य महनीयोऽयं ग्रन्थः। अस्य प्रथमभागस्य विषयवस्तु सर्ग-धर्म-अर्थेति काण्डत्रयेण विभज्य प्रस्तुतम्। ग्रन्थोऽयं सुविस्तृतया भूमिकया समलङ्कृत्य डॉ. हरिवंशकुमारपाण्डेयेन सुसम्पाद्य प्रकाशितः— प्रथमो भागः ४५०.००

५. **जैमिनीयं सामगानम्** : जैमिनिमुनिना प्रणीतं ग्रन्थरत्नमिदं द्वितीयसंस्करणात्मकं प्रकाशतामानीतम्। ग्रन्थेऽस्मिन् सामगानस्यानेकेषां छन्दसामुपबृंहणमस्ति। ग्रन्थोऽयं श्रीरामनाथदीक्षितस्य विस्तृतया भूमिकया सुशोभितोऽस्ति— २००.००

६. **केदारखण्डः** : स्कन्दपुराणीयमाहेश्वरखण्डान्तर्गतकेदारखण्डस्य प्रकाशनं प्रो. वाचस्पतिद्विवेदिनो **हिन्दी-भाषानुवादेन** सह कृतमस्ति। पौराणिककथानकैः सत्कर्मणो भगवत आशुतोषस्य भक्तिभावनायाः सततं प्रेरणाप्रदाने पूर्णरूपेण सक्षमोऽयं ग्रन्थः। प्रो. द्विवेदिनो विस्तृतया भूमिकया सनाथितोऽयं प्रकाशितः— प्रथमो भागः ४६०.००

७. **सात्वतसंहिता** : वैष्णवतन्त्रस्य मूर्धन्यतमोऽयं ग्रन्थः अलशिङ्गभट्टस्य व्याख्यया सनाथितः प्रकाशतामानीतः। श्रीव्रजवल्लभद्विवेदिना सम्पादितस्य सभाष्यस्य ग्रन्थस्यास्य द्वितीयं संस्करणं प्रस्तूयते— ३६०.००

८. **श्रीमालिनीविजयोत्तरतन्त्रम्** : तन्त्रशास्त्रस्य ग्रन्थोऽयं डॉ. परमहंसमिश्रस्य **'नीरक्षीरविवेक'**भाषाभाष्येण समलङ्कृत्य प्रकाशतामानीतः। ग्रन्थोऽयं सम्पूर्णाध्वावर्गोपरि स्वकीयां स्वतन्त्रां दृष्टिं प्रस्तौति। स्वात्म-विमर्शात्मिकया भूमिकया विभूष्य डॉ. परमहंसमिश्रैः सम्पादितोऽयं ग्रन्थः प्रकाशितः— २४०.००

९. **बौद्धदर्शन और मार्क्सवाद** (परिसंवाद-६) : विश्वविद्यालयस्यास्य श्रमणविद्यासङ्कायेन समायोजितायां सङ्गोष्ठ्यां विश्रुतैर्विद्वद्भिः पठितानां विशिष्टनिबन्धानां सङ्कलनं विहितम्। संस्कृत-हिन्दी-आङ्ग्ल-भाषामयान् निबन्धान् सङ्कलय्य डॉ. रमेशकुमारद्विवेदिना सम्पादितोऽयं ग्रन्थः प्रकाशितः— ३६०.००

१०. **मैत्र्युपनिषद्** : श्रीरामतीर्थविरचितया **'दीपिका'**ख्यसंस्कृतव्याख्यया, प्रो. ओमप्रकाशपाण्डेयेन सनाथि-तया **हिन्दीव्याख्यया** विस्तृतया भूमिकया सम्भूष्य सम्पाद्य च प्रकाशितोऽयं ग्रन्थः— १८०.००

११. **श्रीमद्भागवत में सांख्ययोग के तत्त्व : एक परिशीलन** : श्रीमद्भागवतस्य दार्शनिकविश्लेषणात्मकोऽयं ग्रन्थः प्रो. विमलाकर्नाटकमहोदयाभिर्हिन्दीभाषायां प्रणीतः। दर्शनेतिहासाख्यपटलद्वयेन विभक्तोऽयं ग्रन्थो विस्तृतया भूमिकया परिशिष्टादिभिश्च सम्भूष्य सम्पाद्य च प्रकाशितः— ४००.००

१२. **तत्त्वबिन्दुः** : श्रीवाचस्पतिमिश्रप्रणीतोऽयं ग्रन्थः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य विश्वविश्रुतस्य सरस्वतीभवन-पुस्तकालयस्य हस्तलिखितपाण्डुलिपिमाधारीकृत्य डॉ. रजनीशकुमारशुक्लेन सम्पादितः प्रकाशतामानीतः— १२०.००

१३. **शिवलीलार्णवः** : महाकविना श्रीनीलकण्ठदीक्षितेन प्रणीतं द्वाविंशसर्गात्मकं महाकाव्यमिदं भगवतः शिवस्य चतुष्षष्टिलीलानां लालित्यपूर्णं वर्णनं प्रस्तौति। सुविस्तृतया भूमिकया विविधैः परिशिष्टैश्च सम्भूष्य डॉ. ददन-उपाध्यायेन सम्पादितमिदं महाकाव्यं प्रकाशितम्— २००.००

*पत्रव्यवहारसङ्केतः*— **निदेशकः,** प्रकाशनसंस्थानस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी-२२१००२